कालंमि अणाईए, जीवाणं विविहकम्मवसगाणं। तं नत्थि संविहाणं, संसारे जं न संभवइ ॥ १० ॥

व्याख्या-'अनादौ' आदिरहिते 'काले' परिवर्तनालक्षणे 'विविधकर्मवशगानां' विविधकर्मायत्तानां 'जीवानां' प्राणिनां संसारे तत् 'संविधानं' भेदो नास्ति यत् 'न सम्भवति' न घटते, अपि तु सर्वमपि घटत इत्यर्थः, जन्तुभिर्नानाजातिष्वनेकविधकर्मप्रेरितैः सर्वेऽपि भेदा एकेन्द्रियादयः प्राप्ता इत्यर्थः ॥ १० ॥

बंधवा सुहिणो सवे, पियमायापुत्तभारिया। पेयवणाओ नियत्तंति, दाऊणं सलिलंऽजलिं ॥ ११ ॥

व्याख्या-सर्वेऽपि 'बान्धवाः' स्वजनाः, 'सुहृदो' मित्राणि, मातापितरौ, प्राकृतत्वात्सूत्रे विपर्ययः, पुत्रभार्या, मृतं प्रति 'सलिलाञ्जलिं' जलतर्पणं, दत्त्वा 'पितृ[प्रेत]वनात्' स्मशानात्, 'निवर्तन्ते' व्याघुट्य स्वगृहमायान्ति, न पुनस्तेन सहाऽनुयान्तीति भावः ॥ ११ ॥

विहडंति सुआ विहडं-ति बंधवा वल्लहा य विहडंति। इक्को कहवि न विहडइ, धम्मो रे जीव ! जिणभणिओ ॥१२॥

व्याख्या-'रे जीव!' आत्मन्!, 'सुताः' पुत्रा 'विघटन्ते' वियुज्यन्ते, स्वस्मात्तेषां पूर्वमेव मृतत्वात्, तथा 'बान्धवाः' स्वजना विघटन्ते, तथा 'वल्लभाश्च' स्त्रियो विघटन्ते, तस्याः मरणेनाऽन्येन सह संयोगाद्वा, अन्यत्सर्वं विघटते, परमेको 'जिनभणित'स्तीर्थकृत्प्रणीतो धर्मः कथमपि न विघटते, धर्मस्तु इहाऽमुत्राऽपि सुखकारणत्वादात्मनो न वियुज्यत इति भावः॥ १२ ॥

अडकम्मपासबद्धो, जीवो संसारचारए ठाइ। अडकम्मपासमुक्को, आया सिवमंदिरे ठाइ ॥ १३ ॥

व्याख्या-हे आत्मन्! अष्टसंख्यानि कर्माण्येव पाशास्तैः 'बद्धः' संयतोऽयं 'जीवः' प्राणी 'संसारचारके' भवरूपे बन्दि-गृहे, 'तिष्ठति' आस्ते, अष्टकर्मपाशेभ्यो 'मुक्तो' रहित आत्मा 'शिवमन्दिरे' मोक्षसौधे तिष्ठति, यदा आत्मा कर्मरहितो भवति तदैकसमयेन क्षेत्रान्तरमस्पृशन् मोक्षं प्रयातीति ॥ १३ ॥

विहवो सज्जणसंगो, विसयसुहाइं विलासललियाइं। नलिणीदलऽग्गघोलिर-जललवपरिचंचलं सव्वं ॥ १४ ॥

व्याख्या-'विभवो' धनं, तथा 'सज्जनानां' पितृमातृभ्रातृभार्यादीनां, 'सङ्गः' सम्बन्धः, तथा 'विलासेन' लीलया 'ललितानि' मनोज्ञानि, 'विषयसुखानि' विषयसौख्यानि, एतत्सर्वं 'नलिनीदलाग्रे' पद्मिनीपत्रप्रान्ते, "घोलिरो" दोलन-शीलो यो 'जललवः' पानीयबिन्दुस्तद्वत् 'परिचञ्चलं' अतिशयेनाऽस्थिरं, यथा नलिनीपत्रप्रान्ते जलबिन्दुः स्तोकं काल-मेव तिष्ठति, वायुना शीघ्रमेव पतनात्, तथा विभवादिकं सर्वमप्यस्थिरमित्यर्थः, "घूर्णो घुल-घोल-घुम्म-पहल्लाः [ ८-४-११७ ]" इति [ हैम प्रा० ] सूत्रेण घूर्णधातोर्घोल आदेशस्ततः शीलार्थे इरप्रत्ययः ॥ १४ ॥ [ अथ ] कानपि पूर्वं यूनो बलाद्युपेतान् दृष्ट्वा पश्चात्तानेव जरतो गलितशरीरान् वीक्ष्योपदेशमाह—

तं कत्थ बलं तं कत्थ, जुव्वणं अंगचंगिमा कत्थ ?। सव्वमणिच्चं पिच्छह, दिट्ठं नट्ठं कयंतेण ॥ १५ ॥

व्याख्या-हे प्राणिनः! 'तद्' इति तारुण्यावस्थायां यद् 'बलं' पराक्रममासीत्, तद्बलं तव कुत्र गतं ?, तथा तद् यौवनं' तारुण्यं कुत्र ?, तथा 'अङ्गचङ्गिमा' शरीरोत्कृष्टता, कुत्र ?, तस्मात् 'कृतान्तेन' कालेन, कृत्वा 'दृष्टनष्टं' पूर्वं दृष्टं

पश्चान्नष्टमिति दृष्टनष्टं 'सर्वं' समस्तं 'अनित्यं' अशाश्वतं 'पश्यत' अवलोकयत, पूर्वं यच्छरीरमेवंविधमासीत्तदेव सम्प्रति कालेनैवंविधं विहितमिति का तत्र शरीरे आस्थेति भावः ॥ १५ ॥

घणकम्मपासबद्धो, भवनयरचउप्पहेसु विविहाओ। पावइ विडंबणाओ, जीवो को एत्थ सरणं से ? ॥ १६ ॥

व्याख्या–हे प्राणिन्! अयं 'जीवः' प्राणी 'घनानि' प्रचुराणि, यानि कर्माणि तान्येव 'पाशा' बन्धनग्रन्थयस्तैः 'बद्धः' संयतः सन् 'भव'श्चातुर्गतिकसंसार एव नगरचतुष्पथानि, तेषु 'विविधा' अनेकप्रकाराः शरीरमनोदुःखदायिन्यो 'विट-[पिड]म्बना' विगोपनानि वधबन्धादिरूपाणि प्राप्नोति, अतः "एत्थ" एतस्मिन्, संसारे "से" तस्य प्राणिनः कः शरणं ?, यदवष्टम्भाद्विगोपनानि स न प्राप्नुयादिति ॥ १६ ॥

घोरंमि गब्भवासे, कलमलजंबालअसुइवीभच्छे। वसिओ अणंतखुत्तो, जीवो कम्माणुभावेण ॥ १७ ॥

व्याख्या–'घोरे' रौद्रे 'गर्भवासे' जनन्युदरैकदेशे अयं जीवः 'कर्मणां' शुभाशुभरूपाणां 'अनुभावेन' प्रभावेण 'अनन्त-कृत्वः' अनन्तवारान्, 'उषितः' स्थितः, किम्भूते गर्भवासे ?, 'कलमलो' जठरद्रव्यसमूहः, स एव 'जम्बालः' कर्दमस्तेन 'अशुचि'रुद्वेजनीय–उद्वेगकारी, 'विभत्सो' भयजनकस्तस्मिन् ॥ १७ ॥

चुलसीई किर लोए, जोणीणं पमुहसयसहस्साइं। इक्किक्कंमि अ जीवो, अणंतखुत्तो समुप्पन्नो ॥ १८ ॥

व्याख्या-किलेत्यागमोक्तौ, 'लोके 'योनीनां' जीवोत्पत्तिस्थानानां, चतुरशीतिः 'प्रमुखशतसहस्राणि' भेदलक्षाणि, विद्यन्ते, 'जीवः' प्राणी, एकैकस्यां च योनावनन्तवारान् समुत्पन्नः ॥ १८ ॥

मायापियबंधूहिं, संसारत्थेहिं पूरिओ लोओ । बहुजोणिनिवासीहिं, न य ते ताणं च सरणं च ॥ १९ ॥

व्याख्या-'बहुयोनिनिवासिभि'श्चतुरशीतिलक्षप्रमाणयोनिवासिभिः, 'संसारस्थै'र्भवस्थितैर्मातापितृबन्धुभिरयं लोकः 'पूरितो' भृतः, अमी जन्तवः सर्वेऽपि कदाचिन्मातृत्वेन कदाचित्पितृत्वेन कदाचिद्बन्धुत्वेन जाता इति, न च ते संसारस्था मात्रादयस्त्राणं भवन्ति, आपत्तरणसमर्थं त्राणमुच्यते, यथा महास्रोतोभिरुह्यमाणः सुकर्णधाराधिष्ठितं प्लव(पोत)-मागतायाऽऽपत्तरतीति, न च ते शरणं भवन्ति, शरणं पुनर्यदवष्टम्भान्निर्भयैः स्थीयते, तत्पुनर्दुर्गं पर्वतः पुरुषो वेति, तथाऽत्र न कश्चिदस्तीति, उक्तं च—"जन्मजरामरणभयै-रभिद्रुते व्याधिवेदनाग्रस्ते । जिनवचनादन्यत्र तु, नास्ति [च] शरणं क्वचिल्लोके ॥ १ ॥" ॥ १९ ॥

जीवो वाहिविलुत्तो, सफरो इव निज्जले तडप्फडए । सयलो वि जणो पिच्छइ, को सक्को वेयणाविगमे ? ॥ २० ॥

व्याख्या-जीवो 'व्याधिभी' रोगैः 'विलुप्तो'ऽभिद्रुतो 'निर्जले' जलरहितप्रदेशे 'शफर इव' मत्स्य इव "तडप्फडए"त्ति व्याकुली भवति, तथाविधं रोगैः पीड्यमानं जनं सकलोऽपि जनः 'पश्यति' अवलोकते, परं तस्य 'वेदनायाः' पीडाया, 'विगमे' विनाशे, कः पुरुषः 'शक्तः' समर्थः ?, अपि तु न कोऽपि तत्पीडामपगमयतीत्यर्थः ॥ २० ॥

मा जाणसि जीव ! तुमं, पुत्तकलत्ताइँ मज्झ सुहहेऊ। निउणं बंधणमेयं, संसारे संसरंताणं ॥ २१ ॥

व्याख्या-हे 'जीव !' आत्मन् !, त्वं 'मा जानीहि' माऽवबुध्यस्व, यथा मम पुत्रकलत्रादिः सुखहेतुर्भविष्यति, तर्हि किं जाने ? इत्याह-'संसारे' भवे, 'संसरतां' नारकतिर्यग्भवादिरूपेण पर्यटतां जीवानामेतत् पुत्रकलत्रादिकं 'निपुणं' गाढं बन्धनं, एतद्बन्धनबद्धा एव जन्तवः संसारे तिष्ठन्तीत्येवं जानीहीति भावः ॥ २१ ॥

जणणी जायइ जाया, जाया माया पिया य पुत्तो य। अणवत्था संसारे, कम्मवसा सव्वजीवाणं ॥ २२ ॥

व्याख्या-हे प्राणिन् ! संसारे 'कर्मवशात्' कर्मपरतन्त्रतया, 'सर्वजीवानां' सकलप्राणिनां, 'अनवस्था' अनैयत्यं, तामेवाऽऽह-या 'जननी' माता, सैव भवान्तरे 'जाया' पत्नी 'जायते' उत्पद्यते, या जाया सा माता जायते, तथा कर्मवशात् पिता च पुत्रो भवति, च शब्दात्पुनश्च पिता भवति, अतोऽनवस्थैव, यदा जननी जनन्येव जाया जायैव भवान्तरेऽपि भवेत्तदाऽवस्था-नैयत्यं भवेत्, तथा नास्ति, अतोऽनवस्था, तथा चोक्तं श्रीमद्भगवत्याम्-"अयं णं भंते ! जीवे सव्वजीवाणं मातित्ताए पियत्ताए भाइत्ताए भगिणित्ताए भज्जत्ताए पुत्तत्ताए धुतत्ताए सुहत्ताए उववण्णपुव्वे ?, हंता गोयमा ! असतिं[1] अदुवा[2] अणंतखुत्तो[3]! सव्वजीवा वि णं भंते ! इमस्स जीवस्स मातित्ताए जाव उववण्णपुव्वा ?, हंता गोयमा ! जाव अणंतखुत्तो ! अयं णं भंते ! जीवे सव्वजीवाणं अरित्ताए[4] वेरियत्ताए[5] घातयत्ताए[6] वहगत्ताए[7] पडिणीयत्ताए[8] पच्चामित्त-[9]

१ असकृत्-अनेकशः। २ अथवा। ३ अनन्तकृत्व:-अनन्तवारान्। ४ सामान्यतः शत्रुभावेन। ५ वैरिक:-शत्रुभावानुबन्धयुक्तस्तया। ६ मारकतया। ७ व्यथकतया-ताडकतयेत्यर्थः। ८ प्रत्यनीकतया-कार्योपघातकतया। ९ अमित्रसहायतया। [ इति वृत्तौ श्रीमदभयदेवसूरिमिश्राः ]।

त्ताए उववण्णपुवे ?, हंता गोयमा ! जाव अणंतखुत्तो । सवजीवा वि णं भंते !, एवं चेव । अयं णं भंते ! जीवे सवजीवाणं रायत्ताए जुवरायत्ताए जाव सत्थवाहत्ताए उववण्णपुवे ?, हंता गोयमा ! असइं जाव अणंतखुत्तो । सवजीवा वि णं एवं चेव । अयं णं भंते ! जीवे सवजीवाणं दासत्ताए[1] पेसत्ताए[2] भयगत्ताए[3] भातिल्लगत्ताए[4] भोगपुरिसत्ताए[5] सीसत्ताए[6] वेसत्ताए[7] उववण्णपुवे ?, हंता गोयमा ! जाव अणंतखुत्तो । एवं सवजीवा वि अणंतखुत्तो" (इति) द्वादशशतके सप्तमोद्देशके ॥ २२ ॥

न सा जाई न सा जोणी, न तं ठाणं न तं कुलं । न जाया न मुया जत्थ, सवे जीवा अणंतसो ॥ २३ ॥

व्याख्या–संसारे सा 'जातिः' क्षत्रियादिर्न, तथा सा 'योनि'र्जीवोत्पत्तिस्थानं न, तथा तत् 'स्थानं' आकाशक्षेत्रं न, तथा चोक्तं श्रीभगवत्यां–"एयंसि णं भंते ! महालगंसि लोगंसि अत्थि भंते ! केती परमाणुपोग्गलमेत्ते वि पएसे, जत्थ णं अयं जीवे ण जाते न मते वा वि ?, गोयमा ! णो तिणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चति ?, एयंसि णं ए महालयंसि लोगंसि णत्थि केई परमाणुपोग्गलमेत्ते वि पएसे जत्थ णं अयं जीवे ण जाते ण मते वा वि ?, गोयमा ! से जहा नामए केइ पुरिसे अयासयस्स[8] एगं महं अयावयं[9] करेज्जा, से णं तत्थ जहन्नेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं अयासहस्सं[10]

---

१ गृहदासीपुत्रतया । २ प्रेष्यतया–आदेश्यतया । ३ भृतकतया–दुष्कालादौ पोषिततया । ४ कृष्यादिलाभस्य भागग्राहकतया । ५ अन्यैरुपार्जितार्थानां भोगकारिनरतया । ६ शिक्षणीयतया । ७ द्वेष्यतयेति । ८ पष्ठ्याश्चतुर्थ्यर्थत्वात्, अजाशताय । ९ अजाव्रजं–अजावाटकम् । १० यदिहाऽजाशतप्रायोग्ये वाटके उत्कृष्टेनाऽजासहस्रप्रक्षेपणमभिहितं तत्तासामतिसङ्कीर्णतयाऽवस्थानख्यापनार्थम् । [ इति वृत्तौ श्रीमदभयदेवसूरिपूज्याः ] ।

पक्खिवेज्जा, ताओ णं तत्थ पउरगोयराओ पउरपाणियाओ जहण्णेणं एगाहं वा दुयाहं वा तियाहं वा उक्कोसेणं छम्मासे परिवसेज्जा, अत्थि णं गोयमा ! तस्स अयावयस्स केती परमाणुपोग्गलमेत्ते वि पएसे जे णं तासिं अयाणं उच्चारेण वा पासवणेण वा खेलेण वा सिंघाणएण वा वंतेण वा पित्तेण वा पूएण वा सुक्केण वा सोणिएण वा चम्मेहिं वा रोमेहिं वा सिंगेहिं वा खुरेहिं वा णहेहिं वा अणक्कंतपुव्वे भवति ?, भगवं ! णो तिणट्ठे समट्ठे, होज्जा वि णं गोतमा ! तस्स अयावयस्स केई परमाणुपोग्गलमेत्ते वि पएसे जे णं तासिं अयाणं उच्चारेण वा जाव णहेहिं वा अणक्कंतपुव्वे, णो चेव णं एयंसि ए महालयंसि लोगंसि, लोगस्स य सासयं भावं संसारस्स य अणादिभावं जीवस्स य णिच्चभावं कम्मबहुत्तं जम्मणमरणबाहुल्लं च पडुच्च णत्थि केई परमाणुपोग्गलमेत्ते वि पदेसे जत्थ णं अयं जीवे ण जाते वा ण मते वा वि, से तेणट्ठेणं तं चेव जाव ण मते वा वि" ( इति ) द्वादशशते सप्तमोद्देशके, तथा तत्कुलमुग्रादि न, यत्र जात्यादिषु सर्वे जीवा 'अनन्तशो' अनन्तवारान् 'न जाता' नोत्पन्ना, 'न मृता' न परासुत्वं प्राप्ता इति, एतावता व्यवहारराशिमुपगतानां येषां जीवानामनन्तः कालो वृत्तो विद्यते तेषां सर्वेष्वपि जात्यादिषु अनन्तश उत्पत्तिर्जातैव भविष्यतीति सम्भाव्यते, पुनरेतदभिप्रायं बहुश्रुता एव विदन्तीति ॥ २३ ॥

तं किं पि नत्थि ठाणं, लोए वालऽग्गकोडिमित्तं पि । जत्थ न जीवा बहुसो, सुहदुक्खपरंपरं पत्ता ॥ २४ ॥

व्याख्या–हे प्राणिन् ! लोके तत्किमपि 'वालाग्रकोटिमात्रं' केशाग्रप्रान्तमात्रमपि 'स्थानं' क्षेत्रं नास्ति, बहास्तां, यत्र

१ प्रचुरचरणभूमयः प्रचुरपानीयाश्च, अनेन च तासां प्रचुरमूत्रपुरीषसम्भवो बुभुक्षापिपासाविरहेण सुस्थतया चिरजीवित्वं चोक्तम् । [ इति वृत्तौ ]।

वालाग्रकोटिमात्रेऽपि स्थाने 'वहुशो' वहून् वारान् 'जीवाः' प्राणिनः, 'सुखदुःखपरम्परां' सातासातपरिपाटीं, न प्राप्ताः, एतावता जीवाः कर्मवशगाः सर्वत्र कदाचित्सुखं कदाचिद्दुःखं प्रापुरित्यर्थः ॥ २४ ॥

सवाओ रिद्धीओ, पत्ता सधे वि सयणसंबंधा । संसारे ता विरमसु, तत्तो जइ मुणसि अप्पाणं ॥ २५ ॥

व्याख्या-हे आत्मन् ! संसारे पर्यटता भवता सर्वा 'ऋद्धयः' सम्पदः, प्राप्ता, अपि शब्दश्चार्थश्च पुनस्त्वया सर्वे स्वजनसम्बन्धा मातापितृभ्रात्रादिभेदभिन्नाः प्राप्ताः, यतो "मातापितृसहस्राणि, पुत्रदारशतानि च । युगे युगे व्यतीतानि, मोहस्तेषु न युज्यते ॥ १ ॥" अयुक्तत्वं च "दाराः परिभवकारा, वन्धुजनो वन्धनं विषं विषयाः । कोऽयं जनस्य मोहो ?, ये रिपवस्तेषु सुहृदाशा ॥ २ ॥" "ता" इति तस्मात्कारणात् यद्यात्मानं सुखिनं भवन्तं जानासि तदा तद्ध्रिस्वजनसम्बन्धेभ्यो 'विरमस्व' निवर्त्तस्व, विरतेः सुखकारणत्वादिति ॥ २५ ॥

एगो बंधइ कम्मं, एगो वहबंधमरणवसणाइं । विसहइ भवंमि भमडइ, एगुच्चिय कम्मवेलविओ ॥ २६ ॥

व्याख्या-'एक एव' असहाय एव जीवः 'कर्म' ज्ञानावरणीयादि, 'बध्नाति' आत्मना सह संश्लिष्टं करोति, तथा एक एव भवान्तरे 'वध'स्ताडनं, 'बन्धो' रज्ज्वादिना संयमनं, 'मरणं' प्राणच्यवनं, 'व्यसनं' आपत्, ततो वधश्च वन्धश्च मरणं च व्यसनं च, तानि 'विषहते' अनुभवति, वधवन्धादिकं नरकादौ प्राप्नोतीत्यर्थः, तथा एक एव कर्मभि"र्वेलविओ" त्ति वञ्चितः-पुण्यकरणाद्विप्रलब्धः सन् 'भवे' संसारे भ्रमति, वञ्चेर्वेलवादेशो भवति ॥ २६ ॥

अन्नो न कुणइ अहियं, हियं पि अप्पा करेइ न हु अन्नो। अप्पकयं सुहदुक्खं, भुंजसि ता कीस दीणमुहो? २७

व्याख्या–हे प्राणिन्! 'अहितं' अनिष्टं वधबन्धादिकं अन्यः कोऽपि न कुरुते, यथाऽनेनाऽहं ताडित इत्यादि परकृतं मा चिन्तयेति भावः, तथा 'हितमपि' इष्टमप्यात्मनः सुखकारणकदम्बकं आत्मैव करोति, 'हु' निश्चये, नैव 'अन्यः' परः करोति, "ता" इति तत, 'आत्मकृतं' आत्मना शुभाशुभकर्मप्रेरितेन 'कृतं' विहितं, सुखदुःखं 'भुनक्षि' अनुभवसि, ततः कस्माद् 'दीनमुखो' विच्छायवदनः?, यदि परेण किञ्चिदिष्टमनिष्टं वा कृतं स्यात्तदा तव तयोरुपरि रागद्वेषकरणमुचितं स्यात्, परं स्वात्मैव सर्वं करोतीति, तथा चोक्तं श्रीउत्तराध्ययनेषु २०—"अप्पा नई वेयरणी, अप्पा मे कूडसामली। अप्पा कामदुहा धेणु, अप्पा मे नंदणं वणं॥ १॥ अप्पा कत्ता विकत्ता य, दुक्खाण य सुहाण य। अप्पा मित्तममित्तं च, दुप्पट्ठियसुपट्ठिओ॥ २॥" ॥ २७॥

बहुआरंभविढत्तं, वित्तं विलसंति जीव! सयणगणा। तज्जणियपावकम्मं, अणुभवसि पुणो तुमं चेव ॥ २८॥

व्याख्या–हे 'जीव!' आत्मन्!, त्वया 'बहुना आरम्भेण' कृष्यादिरूपेण, "विढत्तं" उपार्जितं 'वित्तं' धनं 'स्वजनगणाः' पितृमातृभ्रातृपुत्रादयो 'विलसन्ति' अनुभवन्ति–तत्फलभोक्तारो भवन्तीति भावः, तेन आरम्भेण 'जनितं' उत्पादितं 'पापं' अशुभप्रकृतिरूपं 'कर्म' ज्ञानावरणीयादि, त्वमेव एककः पुनर्नरकादौ, आर्षवचनत्वाद् "वर्तमानसामीप्ये वर्तमानवद्वे"ति वचनाद्वा भविष्यति वर्तमाना[देशः], 'अनुभविष्यसि' तत्फलस्वादं लप्स्यसे इत्यर्थः॥ २८॥

अह दुक्खियाइँ तह भु-क्खियाइँ जह चिंतियाइँ डिंभाइँ ।
तह थोवं पि न अप्पा, विचिंतिओ जीव ! किं भणिमो ? ॥ २९ ॥

व्याख्या-हे आत्मन् ! त्वया यथा मोहवशगेन 'डिम्भा' बाला अथ 'दुःखिताः' शीतत्राणाद्यभावेन पीडिता वर्तन्ते, तथा 'बुभुक्षिताः' क्षुधिता वर्तन्त इति 'चिन्तिता' अहर्निशं तच्चिन्ताकुलिततया विचारिताः, परं हे जीव ! त्वया 'स्तोकमपि' अल्पमपि 'आत्माऽकृतपुण्यः परलोके कथं भविष्यतीत्येवं' न विचिन्तितोऽतस्त्वां 'किं भणामः' किं वच्मः ?, योग्यस्यैवोपदेशार्हत्वात्, त्वं च परार्थचिन्तको जातो, न स्वार्थचिन्तक, इत्यतो मूर्खः, "स्वार्थभ्रंशो हि मूर्खते"ति वचनात् ॥ २९ ॥

खणभंगुरं सरीरं, जीवो अण्णो य सासयसरूवो । कम्मवसा संबंधो, निब्बंधो इत्थ को तुज्झ ? ॥ ३० ॥

व्याख्या-हे आत्मन् ! इदं शरीरं 'क्षणभङ्गुरं' क्षणविध्वंसि, यत उक्तं श्रीआचारांगे [ लोकसाराध्ययने द्वितीयोद्देशके ] "भेउरधम्मं विद्धंसणधम्मं अधुवं अणितयं असासयं चयावचइयं विपरिणामधम्म"मित्यादि, एतट्टीका "अपि चैतदौदारिकं शरीरं सुचिरमप्यौषधरसायनाद्युपबृंहितं मृण्मयाऽऽमघटादपि निस्सारतरं सर्वथा सदा विशरारुविति दर्शयन्नाह-"भेउरधम्म" मित्यादि, यदि वा पूर्वं पश्चादप्येतदौदारिकं शरीरं वक्ष्यमाण धर्मस्वभावमित्याह-"भेउरधम्म" मित्यादि, स्वयमेव भिद्यत इति भिदुरः, स धर्मोऽस्य शरीरस्येति भिदुरधर्ममिदमौदारिकं शरीरं सुपोषितमपि वेदनोद-

याच्छिरउदरचक्षुरुर प्रमृत्यवयवेषु स्वत एव भिद्यत इति भिदुरं, तथा 'विध्वंसनधर्मं' पाणिपादाद्यवयवविध्वंसनात्, तथा अवश्यम्भावसम्भावितं त्रियामान्ते सूर्योदयवद् ध्रुवं, न तथा यत् तदध्रुवं, तथा अप्रच्युतानुत्पन्नस्थिरैकस्वभावतया कूटस्थनित्यत्वेन व्यवस्थितं सन्नित्यं, नैवं यत्तदनित्यमिति, तथा तेन तेन रूपेणोदकधारावच्छश्वद्भवतीति शाश्वतं, ततोऽन्यदशाश्वतं, तथेष्टाहारोपभोगतया धृत्युपष्टम्भादौदारिकशरीरवर्गणापरमाणूपचयाच्चयस्तदभावेन तद्विघटनादपचयः, चयापचयौ विद्येते यस्य तच्चयापचयिक, अत एव विविधः 'परिणामो' अन्यथाभावात्मको 'धर्मः' स्वभावो यस्य तद्विपरिणामधर्मं" [ इति सिद्ध० सा० प्र० स० मुद्रिते १८७ पत्रे ], यतश्चैवम्भूतमिदं शरीरकं, तथा 'शाश्वतस्वरूपो' अप्रच्युतानुत्पन्नस्वरूपो 'जीव' आत्मा 'अन्य.' शरीराद् भिन्नस्तदपगमे तदनपगमात्, तर्हि परस्परं विभेदे अनयोः शरीरात्मनोः परस्परं सम्बन्धः कथं ? इत्याह–'कर्मवशात्' कर्मपरतन्त्रतयाऽनयोः 'सम्बन्धः' संयोगः, अतस्तत्राऽस्मिन् शरीरे को 'निर्बन्धः' अनुबन्धः–का मूर्च्छा ?, उक्तं च–"मंसऽट्ठिरुहिरण्हारू–वणद्धकलमलयमेयमज्जासु । पुण्णंमि चम्मकोसे, दुग्गंधे असुइवीभच्छे ॥ १ ॥ सचारिमजंतगलं–तवच्चमुत्तंतसयपुण्णंमि । देहे होज्जा ? किं रा–गकारणं असुइहेउम्मि ॥ २ ॥" अतः शरीरेऽनुबन्धं परित्यज्य किञ्चिद्धर्मे उद्यमं कुर्वीति भावः ॥ ३० ॥

कह आयं कह चलियं, तुमं पि कह आगओ कहं गमिही । अन्नुन्नं पि न याणह, जीव ! कुडुंबं कओ तुज्झ ? ३१

व्याख्या–हे जीव !, आत्मन् ! इदं ' कुडुम्बं' मातृपितृभ्रात्रादि कुत आगतं ?, तथा 'कुत्र चलितं' इतो मृत्वा कुत्र

गतं ?, त्वमपि कुत आगतः कुत्र गमिष्यसीति 'अन्योऽन्यमपि' परस्परमपि युवां 'न जानीथे' न बुध्येथे, यत उक्तं श्री-आचाराङ्गे [ शस्त्रपरिज्ञाऽध्ययने प्रथमोद्देशके ] "इह मेगेसिं णो सन्ना भवति, तं जहा-पुरच्छिमाओ वा दिसाओ आगओ अहमंसि, दाहिणाओ वा दिसाओ आगओ अहमंसि, पचत्थिमाओ वा दिसाओ आगओ अहमंसि, उत्तराओ वा दिसाओ आगओ अहमंसि, उड्ढाओ वा दिसाओ आगओ अहमंसि, अहो दिसाओ वा आगओ अहमंसि, अन्नयरीओ वा दिसाओ अणुदिसाओ वा आगओ अहमंसि । एवमेगेसिं णो नातं भवति-अत्थि मे आया उववाइए, णत्थि मे आया उववाइए, के अहं आसी ? केवा इओ चुए इह पेच्चा भविस्सामि ?, से जं पुण जाणेज्जा सहसंमदियाए परवागरणेणं अण्णेसिं वा सोचा" इत्यादि, अतस्तव कुतः कुटुम्बं ?, परस्परमपि गमनागमनाद्यनवगमात् ॥ ३१ ॥

खणभंगुरे सरीरे, मणुयभवे अब्भपडलसारिच्छे । सारं इत्तियमेत्तं, जं कीरइ सोहणो धम्मो ॥ ३२ ॥

व्याख्या-हे आत्मन् ! 'शरीरे' देहे 'क्षणभङ्गुरे' क्षणं क्षणं विशरारुणि, तथा मनुष्यभवे 'अभ्रपटलसदृक्षे' मेघसमूह-समाने, वायुना शीघ्रमेव यथाऽभ्रवृन्दं विनश्यति तथाऽयं मनुष्यभवोऽपि देवभवाद्यपेक्षया अल्पकालावस्थायी, अतोऽत्र 'एतावन्मात्र'मियत्प्रमाणमेव 'सारं' न्याय्यं-न्यायोपपेतं-युक्तमित्यर्थः, यत् 'शोभनः' पञ्चाश्रवाद्विरतिरूपो 'धर्मो' जिन-प्रणीतः क्रियते, "सारं तु द्रविणन्याय्यवारिषु" इत्यनेकार्थः ॥ ३२ ॥

जम्मदुक्खं जरादुक्खं, रोगा य मरणाणि य । अहो ! दुक्खो हु संसारो, जत्थ कीसंति पाणिणो ॥ ३३ ॥

व्याख्या–अहो ! इति जीवसम्बोधने आश्चर्ये वा, संसारे पर्यटतां जन्तूनां तन्नाऽस्ति यद्दुःखरूपं न, तथाहि—जन्मदुःखं, दुःखहेतुत्वाद्दुःखं, तथा चोक्तं–"सूईहिं अग्गिवण्णाहिं, सभिण्णस्स निरंतरं। जारिसी वेयणा होइ, गब्भे अट्ठगुणा तहा ॥ १ ॥ अइविस्सरं रसंतो, जोणीजंताउ कहवि निप्फडइ। माऊइ अप्पणो वि य, वेयणमउलं जणेमाणो ॥ २ ॥ जायमाणस्स जं दुक्खं, मरमाणस्स जंतुणो। तेण दुक्खेण संतत्तो, न सरइ जाइमप्पणो ॥ ३ ॥" तथा 'जरा' वयोहानिर्दुःखं, तथा चोक्तं—"थरहरइ जंघजुयलं, झिज्जइ दिट्ठी पणस्सइ सुई वि। भज्जइ अंगं वाए–ण होइसि भो ! विअइपवरो ॥ १ ॥ लोयंमि अणाइज्जो, हसणिज्जो होइ सोअणिज्जो उ। चिट्ठइ घरस्स कोणे, पडिओ मंचंमि कासंतो ॥ २ ॥ वुड्ढत्तणंमि भज्जा, पुत्ता धूआ य वहुजणो वा वि। जिणदत्तसावगस्स व, पराभवं कुणइ अइदुसहं ॥ ३ ॥" तथा चोक्तं श्रीआचाराङ्गे–[ लोकविजयाध्ययने प्रथमोद्देशके] "जेहिं वा सद्धिं संवसति ते वि णं एगया नियगा तं पुव्विं परिवयंति, सो वा ते नियगे पच्छा परिवएज्जा, नालं ते तव ताणाए सरणाए वा, तुमं पि तेसिं नालं ताणाए वा सरणाए वा" एतट्टीका—"वा शब्दः पक्षान्तरद्योतकः, आस्तां तावदपरे लोका, यैः पुत्रकलत्रादिभिः 'सार्धं' सह, संवसति त एव भार्यापुत्रादयो, 'ण'मिति वाक्यालङ्कारे, 'एकदे'ति वृद्धावस्थायां "नियगा"आत्मीया, ये तेन समर्थावस्थायां पूर्वमेव पोषितास्ते तं 'परिवदन्ति' परि–समन्ताद्वदन्ति–यथाऽयं न म्रियते नाऽपि मञ्चकं ददाति, यदि वा 'परिवदन्ति' परिभवन्तीत्युक्तं भवति, अथवा किमनेन वृद्धेनेत्येवं परिवदन्ति, न केवलमेषां, तस्याऽऽत्माऽ[शरीरम]पि तस्यामवस्थायामवगीतो भवतीति, आह च—"वलिसंततमस्थिशेषितं, शिथिलस्नायुधृतं कडेवरम्। स्वयमेव पुमान् जुगुप्सते, किमु कान्ता

कमनीयविग्रहा ! ॥ १ ॥" गोपालनाललनादीनां च दृष्टान्तद्वारेणोपन्यस्तोऽर्थो बुद्धिमधितिष्ठतीत्यतस्तदाविर्भावनाय कथानकं—कौशाम्ब्यां नगर्यामर्थवान् बहुपुत्रो धनो नाम सार्थवाहस्तेन चैकाकिना नानाविधैरुपायैः स्वापतेयमुपार्जितं, तचाऽशेषदुःस्थितबन्धुजनस्वजनमित्रकलत्रभ्रातृपुत्रादिभोग्यतां निन्ये, ततोऽसौ कालपरिपाकवशाद् वृद्धभावमुपगतःसन् पुत्रेषु सम्यक्पालनोपचितकलाकुशलेषु समस्तकार्यचिन्ताभारं निचिक्षेप, तेऽपि 'वयमनेनेदृशीमवस्थां नीताः सर्वजनाग्रेसरा विहिताः ( कृता )' इति स्मृतोपकाराः सन्तः कुलपुत्रतामवलम्बमानाः स्वतः क्वचित्कार्यव्यासंगात्स्वभार्याभिस्तमकल्पं वृद्धं प्रत्यजीजागरत्, ता अप्युद्वर्तनस्नानभोजनादिना यथाकालमक्षूणं[1] विहितवत्यस्ततो गच्छत्सु दिवसेषु वर्धमानेषु पुत्रभाण्डेषु प्रौढीभवत्सु भर्तृषु जरद्वृद्धे च विवशकरणपरिचारे सर्वाङ्गकम्पिनि गलदशेषस्रोतसि सति शनैः शनैरुचितमुपचारं शिथिलतां निन्युः, असावपि मन्दप्रतिजागरणतया चित्ताभिमानेन विस्रसया च सुतरां दुःखसागरावगाढः सन् पुत्रेभ्यः स्नुषाक्षूणान्याचचक्षे, ताश्च स्वभर्तृभिश्चेखिद्यमानाः सुतरामुपचारं परिहृतवत्यः, यत उक्तं—"अइतज्जणा न कीरइ, पुत्तकलत्तेसु भित्तमित्तेसु । दहियं पि महिज्जंतं, चयइ सिणेहं न संदेहो ॥ १ ॥" ततस्ताः सर्वाश्च पर्यालोच्यैकवाक्यतया स्वभर्तृनभिहितवत्यः—क्रियमाणेऽप्ययं प्रतिजागरणे वृद्धभावाद्विपरीतबुद्धितयाऽपहुते, यदि भवतामप्यस्मा कमुपर्यविस्रम्भस्ततोऽन्येन विश्वसनीयेन निरूपयत,तेऽपि तथैव चक्रुः, तास्तु तस्मिन्नवसरे सर्वा एव सर्वाणि कार्याणि यथाऽवसरं विहितवत्यः, असावपि पुत्रैः पृष्टः पूर्वविरूक्षितचेतास्तथैव ता अपवदति—नैता मम किञ्चित्सम्यक्कुर्वन्ति, तैस्तु प्रत्ययिकवच-

[1] न्यूनतारहितम् ।

नादवगततत्त्वैर्यथाऽयमुपचर्यमाणोऽपि वार्धक्याद्रोरुद्यते [इति प्रत्ययितं], ततस्तैरप्यवधीरितोऽन्येषामपि यथाऽवसरे ते तद्भण्डनस्वभावतामाचचक्षिरे, ततोऽसौ पुत्रैरवधीरितः स्नुषाभिः परिभूतः परिजनेनाऽवगीतो वाङ्मात्रेणाऽपि केनचिदप्यननुवर्त्यमानः सुखितेषु दुःखितः कष्टतरामायुःशेषामवस्थामनुभवतीति, एवमन्योऽपि जराभिभूतविग्रहस्तृणकुब्जीकरणेऽप्यसमर्थः सन् कार्यैकनिष्ठलोकात्परिभवमाप्नोतीति, आह च—"गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते। वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, धिक्कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ १ ॥" इत्यादि, तदेवं जराऽभिभूतं निजाः परिवदन्ति। असावपि परिभूयमानस्तद्विरक्तचेतास्तदपवादान् जनायाऽऽचष्टे, आह च-"सो वा" इत्यादि, वा शब्दः पूर्वापेक्षया पक्षान्तरं दर्शयति, ते वा निजास्तं परिवदन्ति, स वा जराजर्जरितदेहस्तान् निजाननेकदोषोद्घट्टनतया परिवदेन्निन्देद्, अथवाऽविद्यमानार्थतया तानसाववज्ञायति परिभवतीत्यर्थः, येऽपि पूर्वकृतधर्मवशात्तं वृद्धं न परिवदन्ति, तेऽपि तद्दुःखापनयनसमर्था न भवन्तीत्याह च—नाऽलमित्यादि, 'नाऽलं' न समर्थास्ते पुत्रकलत्रादयस्तवेति प्रत्यक्षभावमुपगतं वृद्धमाह-त्राणाय शरणाय वेति, तत्राऽऽपत्तरणसमर्थं त्राणमुच्यते, यथा महास्रोतोऽभिरूह्यमानः सुकर्णधाराधिष्ठितं प्लवमासाद्याऽऽपत्तरतीति, शरणं पुनर्यदवष्टम्भाद्भिर्भयैः स्थीयते तदुच्यते, तत्पुनर्दुर्गं पर्वतः पुरुषो वेति, एतदुक्तं भवति-जराभिभूतस्य न कश्चित्त्राणाय शरणाय वा, त्वमपि तेषां नाऽलं त्राणाय शरणाय वेति"। तथा रोगाश्च दुःखं, तथा चोक्तं श्रीआचारङ्गे [ धूताख्येऽध्ययने प्रथमोद्दे-

१ धसेव्यमानः।

शके ] " गंडी[1] अदुवा कोढी[2], रायंसी[3] अवमारियं[4] । कोणियं[5] झिमियं[6] चेव, कुंणियं[7] खुज्जियं[8] तहा ॥ १ ॥ उदरिं[9] च पास[10] मूयं च, सूणियं[11] च गिलासणिं[12] । वेवइयं[13] पीढसप्पिं[14] च, सिलिवयं[15] मधुमेहणं[16] ॥ २ ॥ सोलस एए रोगा, अक्खाया अणुपुव्वसो । अह णं फुसति आयंका, फासा य असमंजसा ॥ ३ ॥" तथा मरणानि च दुःखं, अनेकभवमरणापेक्षया बहुवचनं, यदुक्तं–"आउं सविल्लंतो, सिढिलंतो बंधणाइ सघाइं । देहट्ठिइं मुयंतो, झायइ कलुणं बहुं जीवो ॥ १ ॥ इक्कं पि नत्थि

---

१ "वातपित्तश्लेष्मसन्निपातज चतुर्धा गण्ड, तदस्यास्तीति गण्डी–गण्डमालावानित्यादि । अथवेत्येतत्प्रतिरोगमभिसम्बध्यते । २ अथवा 'कुष्ठी' कुष्ठमष्टादशभेद, तदस्यास्तीति कुष्ठी । ३ राजासो–राजयक्ष्मा, सोऽस्यास्तीति राजासी–क्षयीत्यर्थं । ४ अपस्मारो वातपित्तश्लेष्मसन्निपातजश्चतुर्धा, तद्वानपगतसदसद्विवेको भ्रममूर्च्छादिकामवस्थामनुभवति प्राणीति । ५ अक्षिरोग –एकाक्षिकत्वादि । ६ जाड्यता–सर्वशरीरावयवानामवशित्वमिति । ७ गर्भाधानदोषाद् ह्रस्वैकपादो न्यूनैकपाणिर्वा कुणि । ८ कुब्ज पृष्ठादावस्यास्तीति कुब्जी, मातापितृशोणितशुक्रदोषेण गर्भस्य दोषोद्भवा कुब्जवामनकादयो दोषा भवन्तीति । ९ वातपित्तादिसमुत्थमष्टधोदर तदस्यास्ती युदरी, तत्र जलोदरमसाध्य , शेषाण्यचिरोत्थिता साध्या इति । १० "पास मूय च"त्ति पश्य–अवधारय मूक मन्मनभाषिण वा, गर्भदोषादेव जात तदुत्तरकाल च । ११ शूनत्व–श्वयथुर्वातपित्तश्लेष्मसन्निपातरक्ताभिघातजोऽय षोढेति । १२ "गिलासणि"त्ति भस्मको व्याधि , स च वातपित्तोत्कटतया श्लेष्मन्यूनतयोपजायत इति । १३ वातसमुत्थ शरीरावयवानां कम्प इति । १४ जन्तुर्गर्भदोषात् पीठसर्पित्वेनोत्पद्यते, जातो वा कर्मदोषाद् भवति । १५ श्लीपद–पादादौ काठिन्य, तद्यथा–प्रकुपितवातपित्तश्लेष्माणोऽध प्रपन्नावङ्क्षणो( वक्षो )रुजङ्घास्ववतिष्ठमाना कालान्तरेण पादमाश्रित्य शनैः शनै शोफमुपजनयन्ति तच्छ्लीपदमित्याचक्षते–"पुराणोदकभूयिष्ठा , सर्वर्तुषु च शीतला । ये देशास्तेषु जायन्ते, श्लीपदानि विशेषत ॥ १ ॥ पादयोर्हस्तयोश्चापि, श्लीपद जायते नृणाम् । कर्णोष्ठनासास्वपि च, केचिच्छिन्दन्ति तद्विद ॥ २ ॥" । १६ मधुमेहो–बस्तिरोग , स विद्यते यस्यासौ मधुमेही, मधुतुल्यप्रस्रावकानित्यथ " । [ इति टीकायां शीलाङ्काचार्यमिश्रा ] ।

जं सुक्कं, सुचरियं जह इमं वलं मज्झ। को नाम दढक्कारो, मरणंते मंदपुन्नस्स ॥ २ ॥" तथा "कथं दुष्कृतकर्माणः, सुखं-रात्रिषु शेरते ? । मरणान्तरिता येषां, नरके तीव्रवेदना ॥ १ ॥" तथा–"सवे जीवा वि इच्छंति, जीविउं न मरिज्जिउं। तम्हा पाणिवहं घोरं, निग्गंथा वज्जयंति णं ॥ १ ॥" [ दश० अ० ६ गाथा ११ ], एतदधिकृत्यैव भगवताऽप्याचाराङ्गे [ सम्यक्त्वाख्येऽध्ययने प्रथमोद्देशके ] उक्तं –"से बेमि जे य अतीया जे य पडुप्पण्णा जे आगमिस्सा अरहंतो भगवंतो ते सवे एवमाइक्खंति एवं भासंति एवं पण्णवेंति एवं परूवेंति–सवे पाणा सवे भूया सवे जीवा सवे सत्ता न हंतवा, न आणावेतवा, न परिघेतवा, न परितावेतवा, न उद्दवेतवा, एस धम्मे सुद्धे णितिए सासए समिच्च लोयं खेदन्नेहिं पवेदिते" एतावता 'न हन्तव्या' इत्यादि कथनेन तेषां मरणं दुःखकरमिति ज्ञापितं, ततः किमित्याह–"दुक्खो हु" त्ति दुःखहेतुरेव संसारो जन्मादिनिबन्धनत्वात्तस्य, यत्र चातुर्गतिके संसारे प्राणिनः 'क्लिश्यन्ते' बाधामनुभवन्ति, "जन्मादि दुःखैरेवेति गम्यं, यद्वाऽनेके द्रव्योपार्जनाद्यर्थं क्लिश्यन्ते, यदुक्तं–"अर्थानामर्जने दुःख–मर्जितानां च रक्षणे। आये दुःखं व्यये दुःखं, धिगर्थं दुःखसाधनम् ॥ १ ॥" ॥ ३३ ॥

जाव न इंदियहाणी, जाव न जरारक्खसी परिप्फुरइ। जाव न रोगवियारा, जाव न मच्चू समुल्लियइ ॥ ३४ ॥

व्याख्या– हे आत्मन् ! यावद् 'इन्द्रियाणां' श्रोत्रादीनां 'हानिः' स्वस्वविषयग्रहणप्रतिघातो न जातोऽस्ति, तथा या-यच्छरीरे जरैव राक्षसी, शरीरसर्वस्वग्रसनात्, 'न परिस्फुरति' नाऽऽगच्छति, तथा यावद् 'रोगाणां' व्याधीनां, 'विकारा'

असद्रूपाः समुल्लासा न वर्तन्ते, तथा यावन् 'मृत्युः' कालो, न समाश्लिष्यति—न मरणं जायते, तावद्धर्मे उद्यमं कुर्वित्यर्थ-
स्तथा चोक्तं भर्तृहरिणा—"यावत्स्वस्थमिदं कलेवरगृहं यावज्जरा दूरतो, यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नाऽऽयुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्, प्रोद्दीप्ते भवने हि कूपखननं प्रत्युद्यमः कीदृशः ? ॥ १ ॥" ॥ ३४ ॥

जह गेहंमि पलित्ते, कूवं खणिउं न सक्कए कोइ । तह संपत्ते मरणे, धम्मो कह कीरए ? जीव ! ॥ ३५ ॥

व्याख्या—यथा गेहे 'प्रदीप्ते' अग्निप्रकोपे जाते सति कोऽपि कूपं खनितुं 'न शक्नोति' न समर्थो भवति, तथा 'मरणे'
परलोकगमने, 'सम्प्राप्ते' आसन्ने जाते हे 'जीव !' आत्मन् ! धर्मः कथं क्रियेत ?, यदा धर्मस्य करणावसरोऽभूत्तदा न
कृतः, सम्प्रति मृत्यूत्सङ्गगतः किं विधास्यसीति भावः ॥ ३५ ॥

रूवमसासयमेयं, विज्जुलयाचंचलं जए जीयं । संझाणुरागसरिसं, खणरमणीयं च तारुण्णं ॥ ३६ ॥

व्याख्या—हे आत्मन् ! एत'द्रूपं' शरीरसौन्दर्यं अशाश्वतं, शश्वद्भवतीति शाश्वतं, न शाश्वतमशाश्वतमनित्यं, रोगा-
दिभिः कारणैरस्य विनाशात्सनत्कुमारचक्रवर्त्यादेरिव, तथा चोक्तं—"थोवेण वि सप्पुरिसा, सणंकुमारुव्व केइ बुज्झंति ।
देहे खणपरिहाणी, जं किर देवेहिं से कहियं ॥ १ ॥" तथा जगति विद्युल्लतावत् 'चञ्चलं' चपलं, 'जीवितं' प्राणधारणं,
यथा विद्युल्लता क्षणदृष्टनष्टा तथेदं जीवितमपि, 'च' पुन'स्तारुण्यं' यौवनं सन्ध्यानुरागसदृशं क्षणं यावद् 'रमणीयं' सु-

न्दरं, यथा सन्ध्यायामभ्रपटलानि विविधवर्णभाञ्जि भवन्ति, पुनर्वायुप्रयोगाद्विनश्यन्ति, तथेदं तारुण्यमपि पञ्च दिनानि भवन्ति, ततो जरैव तद्विनाशिनी समुल्लसत्यतस्तारुण्ये को मदः ? ॥ ३६ ॥

गयकण्णचंचलाओ, लच्छीओ तियसचावसारिच्छं। विसयसुहं जीवाणं, बुज्झसु रे जीव ! मा मुज्झ ॥ ३७ ॥

व्याख्या–हे जीव !–आत्मन् !, यासां लक्ष्मीणां त्वं मदं धत्से 'एता मम यावज्जीवं पार्श्वं न मोक्षन्त्ये'थं परं ता 'लक्ष्म्यः' श्रियो, गजकर्णवत् चञ्चला, न चिरस्थायिन्यो भवन्ति, सम्प्रत्यपि पूर्वं श्रीमन्तो दृष्ट्वा पश्चात्त एव निःश्रीका भूयांसो वीक्ष्यन्त इत्यतः श्रीणां स्थिरत्वं न, तथा जीवानां 'विषयसुखं' शब्दादिसुखं 'त्रिदशचापसदृक्षं' इन्द्रधनुर्वच्चञ्चलं, अतो 'रे जीव !' आत्मन् ! एवं चञ्चलस्वभावं सर्वं ज्ञात्वा 'बुध्यस्व' धर्मे बोधं कुरु, 'मा मुह्यस्व' मा मोहं माप्नुहि, पुनरेतादृक्सामग्र्या योगस्य दुष्प्राप्यत्वात् ॥ ३७ ॥

जह संझाए सउणा–ण संगमो जह पहे अ पहियाणं। सयणाणं संजोगा, तहेव खणभंगुरा जीव ! ॥ ३८ ॥

व्याख्या–यथा 'सन्ध्यायां' सायन्तनसमये 'शकुनानां' पक्षिणां 'सङ्गमः' सम्बन्धः, सन्ध्यासमये एकस्मिंस्तरौ यथ भूयांसः सर्वदिग्भ्यः पक्षिणो मिलन्ति, रात्रावुषित्वा पुनः प्रातर्यथेच्छं यान्ति च, पुनर्यथा 'पथि' मार्गे, 'पथिकानां' अध्वगानां, सङ्गमो, यथा पथि पथिका रात्रावेकत्र स्थित्वा प्रातःकाले स्वस्वेष्टग्रामादिकं प्रति पृथक् पृथग् यान्ति, तथेति यथा तेषां 'तथैव' तेनैव प्रकारेण, 'हे जीव !' आत्मन् ! 'स्वजनानां' सम्बन्धिनां–माता[मातृ]पितृभ्रात्रादीनां, संयोगाः 'क्षणभ-

गुणविन
चीया-
व्याख्या

॥ १२

द्गुराः' क्षणेन विनशनशीलाः, तेऽपि कियन्तं कालं संयुज्य पुनरायुःक्षये वियुज्यन्तेऽतस्तेषु मा मोहं गच्छेरिति भावः ॥३८॥

निसाविरामे परिभावयामि, गेहे पलित्ते किमहं सुयामि ।
डज्झंतमप्पाणमुविक्खयामि, जं धम्मरहिओ दिअहे गमामि ॥ ३९ ॥

व्याख्या–'निशाया' रात्रे'र्विरामे' अवसाने, जागरितः सन्नेवं 'परिभावयामि' चिन्तयामि, किं तद् ?, यदहं धर्मेण रहितो दिवसान् 'गमयामि' अतिवाहयामि, तद् 'गेहे' गृहे, 'प्रदीप्ते' अग्निज्वालावलीढे, किं ? 'स्वपिमि' शये–निद्रां करोमीति यावत्, तथा 'दह्यन्तं' अग्निज्वालयाऽवलेह्यमानं 'आत्मानं' शरीरं 'उपेक्षे' अवगणयामि, दह्यते चेत्तदा दह्यतामित्युपेक्षां विदधामीत्यर्थः, एतावता धर्मरहितदिनान्यतिवाहयता मया कर्माग्निना दह्यमानः स्वात्मा उपेक्षित इति ज्ञापितम् ॥३९॥

जा जा वच्चइ रयणी, न सा पडिनियत्तई । अधम्मं कुणमाणस्स, अहला जंति राइओ ॥ ४० ॥

व्याख्या–या या व्रजति 'रजनी' रात्रिः न सा 'प्रतिनिवर्तते' पुनरागच्छति, ताश्चाऽधर्मं कुर्वतो, जन्तोरिति गम्यते, 'अफला' धर्मरूपफलरहिता रात्रयो यान्ति ॥ ४० ॥

जस्सऽत्थि मच्चुणा सक्खं, जस्स चऽत्थि पलायणं । जो जाणइ न मरिस्सामि, सो हु कंखे सुए सिया ॥ ४१ ॥

व्याख्या–यस्य 'अस्ति' विद्यते, मृत्युना सह 'सख्यं' मैत्री, यस्य चाऽस्ति 'पलायनं' नाशनं, मृत्योरिति प्रक्रमस्तथा

यो जानीते यथा'ऽहं न मरिष्यामि' "सो हु" स एव, 'काङ्क्षति' प्रार्थयते, 'श्वे' आगमिनि दिने 'स्याद्, भविष्यतीदमिति गम्यते, ततोऽद्यैव धर्मं कुरुष्वेति भावः ॥ ४१ ॥

दंडकलियं करिंता, वचंति हु राइओ अ दिवसा य। आउससंविल्लिंता, गया य न पुणो नियत्तंति ॥ ४२ ॥

व्याख्या–हे आत्मन्! "दण्डकलियं" दण्डरीतिं 'कुर्वन्तो' विदधत 'आयु'र्जीवितं 'संवेष्टयन्तः' सन्निहितोपक्रमकारणैर्लघुकुर्वन्तो, 'हु'र्निश्चये, रात्रयश्च दिवसाश्च व्रजन्ति, अयं भावो – यथा कोलिकदण्डः सूत्रमुद्वेष्टते निखिलमपि तथा आयुरुद्वेष्टयन्तो रात्रिवासराः प्रयान्तीत्यर्थः, परं ते रात्रिदिवसा गताश्च न पुन'र्निवर्तन्ते' प्रत्यागच्छन्ति ॥ ४२ ॥

जहेह सीहो व मियं गहाय, मच्चू नरं णेइ हु अंतकाले।
ण तस्स माया व पिया व भाया, कालंमि तंमिंऽसहरा भवंति ॥ ४३ ॥

व्याख्या–यथेत्यौपम्ये, 'इहे'ति लोके 'सिंहो' मृगपति'र्वे'ति पूरणे, 'मृगं' कुरङ्गं गृहीत्वा प्रक्रमात्परलोकं नयतीति सम्बन्धः, एवं 'मृत्युः' कृतान्तो 'नरं' पुरुषं नयति, 'हु'रवधारणे, ततो नयत्येव 'अन्तकाले' जीवितव्यावसानसमये न 'तस्य' मृत्युना नीयमानस्य माता वा पिता वा "भाय"त्ति वा शब्दस्येह गम्यमानत्वाद्भ्राता वा 'काले' तस्मिन् जीवितान्तरूपे 'अंशं' प्रक्रमाज्जीवितभागं 'धारयन्ति' मृत्युना नीयमानं नरं रक्षन्तीत्यंशधरा भवन्तीत्युक्तं हि–"न पिता भ्रातरः पुत्रा, न भार्या न च बान्धवाः। न शक्ता मरणात्त्रातुं, मग्नाः संसारसागरे ॥ १ ॥" इति ॥ ४३ ॥

सुमिणयसमं च पिम्मं, जं जाणसु तं करेज्जासु ॥ ४४ ॥
जीअं जलपिन्दुसमं, संपत्तीओ तरंगलोलाओ। कुशाग्रप्राप्ताम्भोविन्दुवच्चञ्चलं, तथा 'सम्पत्तय' ऋद्धय-
व्याख्या–हे आत्मन्! 'जीवितं' प्राणधारणं 'जलविन्दुसमं' 'स्वप्नसमं' क्षणदृष्टनष्टमित्य-
'मरङ्ग'वद्वीचीव'लोला'श्चपलास्त्वरितमन्यत्र संक्रामन्तीत्यर्थश्च पुनः 'प्रेम' स्त्र्यादीनां स्नेहः, ॥४४॥ रूपकम् ॥
यंसलायज्ञानीये तथा कुरुष्वेति, एतावतैषामस्थिरत्वं ज्ञात्वा स्थिरे श्रीजिनधर्मे उद्यमं कुर्विति सूचितम्
पावजीव! किमियं न बुज्झसि? ४५
संझरागजलबुब्बुओवमे, जीविए य जलबिंदु चंचले। जुवणे य नइवेगसंनिभे, च शब्दो व्यवहितः
व्याख्या–सन्ध्यारागश्च जलबुद्बुदश्चेति द्वन्द्वस्ताभ्यामुपमा यस्य तस्मिन्नेवंविधे 'जीविते' आयुषि, 'यौवने'
सम्बन्धो 'जलबिन्दुचपले च' कुशाग्रादिलग्नतोयलववच्चपले चेत्यर्थः, उपमात्रयाभिधानमतितरलतादर्शनार्थं, किमिदं न
तारुण्ये, च शब्दाद्द्रव्यनिचयादौ च 'नदीवेगसन्निभे' सरिज्जलतुल्ये सति, हे 'पापजीव!' दुरात्मन्!
बुध्यसे? पश्यसपीति ॥ ४५ ॥
पक्खित्तं हयकयंतेण ॥ ४६ ॥
अन्नत्थ सुया अन्नत्थ, गेहिणी परियणो वि अन्नत्थ। भूयबलिव कुडुंबं, परिवारोऽपि अन्यत्र 'हत-
व्याख्या–'अन्यत्र' अन्यस्यां गतौ 'सुताः' पुत्राः, अन्यत्र 'गेहिनी' कलत्रं, 'परिजनोऽपि' यथा भूतेभ्यो बलिः प्रक्षिप्यते
कृतान्तेन' निन्द्ययमेन, सुतादिरूपं कुडुम्बं भूतेभ्यो बलिरिव 'प्रक्षिप्तं' इतस्ततः पर्यस्तं,
तथेदं कुडुम्बमपि सर्वं कृतान्तेन भिन्नां भिन्नां गतिं प्रापितमिति ॥ ४६ ॥

जीवेण भवभवे मि-ल्लियाइ देहाइ जाइ संसारे। ताणं न सागरेहिं, कीरइ संखा अणंतेहिं ॥ ४७ ॥

व्याख्या-हे आत्मन्! यच्छरीरार्थं त्वमेवंविधानि पापानि कुरुषे परं ये देहाः संसारे जीवेन 'भवे भवे' जन्मनि जन्मनि 'मुक्ता'स्त्यक्तास्तेषां देहाना 'अनन्तै'रनन्तसंख्यैः 'सागरैः' समुद्रैः संख्या न क्रियते, अनन्तसंख्यसागरविन्दुभ्योऽपि पूर्वपूर्वभवजीवमुक्तशरीराणामनन्तत्वाद्, यद्वाऽनन्तैः 'सागरैः' सागरोपमसमयैः, शेषं पूर्ववत्तथा चोक्तं-"जीवेण जाणि उ विस-ज्जियाणि जाइसएसु देहाइ। थेवेहिं तओ सयलं, पि तिहुयणं हुज्ज पडिहत्थं ॥ १ ॥" ॥ ४७ ॥

नयणोदयं पि तासिं, सागरसलिलाओ बहुयरं होइ। गलियं रुयमाणीणं, माऊणं अन्नमन्नाणं ॥ ४८ ॥

व्याख्या-हे आत्मन्! तासां रुदन्तीनां 'मातृणां' जननीनां, 'अन्यान्यासां' अपरापर जन्मभाविनीनां ['गलितं' पतितं] 'नयनोदकं' अश्रुजलमपि 'सागरसलिलात्' समुद्रपानीया'द्बहुतरं' अधिकतरं, भवति, ताभी रुदतीभिरश्रुजलमेतावद् ग[ा]लितं पातितं, यत्सख्या समुद्राम्भसाऽपि कर्तुं न शक्यत इत्यर्थः ॥४८॥

जं नरए नेरइया, दुहाइं पावंति घोरऽणंताइं। तत्तो अणंतगुणियं, निगोयमज्झे दुहं होइ ॥ ४९ ॥

व्याख्या-हे आत्मन्! य'न्नैरयिका' नारका नरके 'घोराणि' रौद्राणि च तान्य'नन्तानि' अप्राप्तापरभागानि घोरानन्तानि, 'दुःखानि' असातवेद्यानि, प्राप्नुवन्ति, तथा चोक्तं-"तह फालिया वि उक्कत्ति-आ वि तलिआ वि च्छिन्नभिन्ना वि।

दहा भग्गा मुढिया, तोडिया तह धीटीणा य ॥ १ पाओदएण पुणरवि, मिलंति तह चेव पारयरसुव । इच्छंता वि हु न मरंति, कह वि ते नारय वराया ॥ २ ॥ पभणंति तओ दीणा, मा मारेह सामि ! पहु नाह ! । अइदुसहं दुक्खमिणं, पसिअह मा कुणह पसाहे ॥ ३ ॥ एवं परमाहम्मिय-पाएसु पुणो पुणो वि लग्गंति । दंतेहिं अंगुलीओ, गिण्हंति भणंति दीणाइं ॥ ४ ॥ तत्तो अ निरयपाला, भणंति रे ! अज्ज दूसहं दुक्खं । जइआ पुण पावाइं, करेसि तुट्ठो तया भणसि ॥ ५ ॥ नत्थि जए गयस्स्, अहवा अहमेव एत्थ मयनिऊ । अहवा वि साह पिअह, दिट्ठो सो केण परलोओ? ॥ ६ ॥ गंजा पियंता इह जे मरंति, पुणो वि ते गंति पियंति राइं । सुहाइं तत्ता पुण जे मरंति, पुणो वि तप्पंति खुहाइं ते ऊ ॥ ७ ॥ नत्थि अ पुण्णं पावं, भूअऽब्भहिओ अ दीसइ न जीवो । इच्चाइ भणसि तइया, वायालत्तेण परितुट्ठो ॥ ८ ॥ मंसरसंमि य गिद्धो, जइया मारेसि निग्घिणो जीवे । भणसि तया अम्हाणं, भक्खमिणं निम्मियं विहिणा ॥ ९ ॥ वेयविहिया न दोस, जण्णे अहिंस त्ति अहव जंपेसि । चरचरचररसतो फा-लिऊण खाएसि परमंस ॥ १० ॥ लावयतित्तिरिअंडय-रसरसमाइंणि पियसि अइगिद्धो । इण्हि पुण पुकारसि, अइदुसहं दुक्खमेयंति ॥ ११ ॥ अलिएहि वंचसि तया, कूडतवमाइएहिं मुद्धजणं । पेसुण्णाइंण करे-सि हरिसिओ पलवसि इयाणिं ॥ १२ ॥ तइआ खणेसि खत्तं, घायसि वीसंभियं मुणसि तोयं । परधणउद्धो दुद्दे-सगामनगराइं भंजेसि ॥ १३ ॥ तेण वि पुरिसयारे-ण विलाडिओ मुणसि तणसमं भुवणं । परदव्वेणं विलसेसि, मुणसि पुयार किं पुणिण्हि ? ॥ १४ ॥ मा हरसु परधणाइं, सिक्खविओ भणसि धिट्ठयाए अ । गयस्स वि परकीयं, सहोअर कस्स वि न दयं ॥ १५ ॥ तइया परजुवईणं, चोरियरमियाइं मुणसि सुहाइं । अइरत्तो

वि हु तासिं, मारसि भत्तारपमुहे अ ॥ १६ ॥ सोहग्गे ण य नडिओ, कूडविलासेहिं (!¹) कुणसि ताहिँ समं । इण्हिं तु तत्त-तंबय-डिउलियाणं पलाएसि ॥ १७ ॥ परकीयच्चिय भज्जा, भुंजइ निअया उ माउभइणीओ । एवं च दुविअड्ढत्त-गविओ वयसि सिक्खविओ ॥ १८ ॥ पिंडेसि असंतुट्ठो, वहु पावपरिग्गहं तहा मूढो । आरंभेहि अ तूससि, रूससि ? किं इत्थ दुक्खेहिं ॥ १९ ॥ आरंभपरिग्गहव-ज्जियाण निव्वहइ अम्ह न कुडुंबं । इय भणियं जस्स कए, तं आणसु दुहविभा-गऽत्थं ॥ २० ॥ भरियं पिवीलियाई-ण सीविअं जइ मुहं तुहऽम्हेहिं । ता होसि पराहुत्तो, भुंजसि रयणीइ पुण मिट्ठं ॥ २१ ॥ पियसि सुरं गायंतो, वक्खाणंतो मुआहि नच्चंतो । इह तत्ततिल्लतुंव-तऊणि किं पीअसि ? न हयास ! ॥ २२ ॥ गुरु-देवाणुवहासो, विहिआ आसायणा वयं भग्गं । लोगो अ गामकूड-त्तणाइभावेसु संतविओ ॥ २३ ॥ इय जइ नियहत्था-रो-वियस्स तस्सेव पावविडवस्स । भुंजसि फलाइँ रे दुट्ठ !, अम्ह ता इत्थ को दोसो ? ॥ २४ ॥ इच्चाइ पुव्वभवदु-कयाइँ सुमराविउं निरयपाला । पुणरवि वियणा उ उई-रयति विविहप्पयारेहिं ॥ २५ ॥ उक्कत्तिऊण देहा-उ ताण मंसाइ चड-प्फडंताण । ताणं च्चिय वयणे प-क्खिवंति जलणम्मि भुंजेउं ॥ २६ ॥ रे रे ! तुह पुव्वभवे, संतुट्ठी आसि मंसरसिएहिं । इअ भणिउं तस्सेव य, मंसरस गिण्हिउं दिंति ॥ २७ ॥ तिरियाण य भारारो-वणाणि सुमराविऊण खंधेसु । चडिऊण सुरा तेसिं, भरेण भंजंति अगाइ ॥ २८ ॥ दीणा सव्वनिहीणा, नपुंसगा सरणवज्जिया खीणा । चिट्ठंति नरयवासे, नेरइया अहव किं वहुणा ॥ २९ ॥ अच्छि निमीलणमित्तं, नत्थि सुहं दुक्खमेव अणुवद्धं । नरए नेरइयाणं, अहोनिसं पच्चमाणाणं

१ अस्ति सर्वास्वपि प्रतिष्वय वर्णं, परमर्थसङ्गतिरस्याभावे एनेति मे मति ।

॥ ३० ॥ तत्थ य सम्मद्दिट्ठी, पायं चिंतंति वेयणाऽभिहया । मुत्तुं कम्माइ तुमं, मा रूससु जीव ! जं भणियं ॥ ३१ ॥ गवो पुवकयाणं, कम्माणं पावए फलविवागं । अवराहेसु गुणेसु अ, निमित्तमित्तं परो होइ ॥ ३२ ॥ धारिज्जंतो जल-निधि, वीचीकल्लोलभिन्नकुलसेलो । न हु अन्नजम्मनिम्मिअ, सुहासुहो दिव्वपरिणामो ॥ ३३ ॥ वारिज्जंतो वि हु गुरु-जणेण तइआ करेसि पावाइं । सयमेव किणिय दुक्खे, रूससि रे जीव ! कस्सिर्णिहं ? ॥ ३४ ॥ सत्तमियाओ अन्ना, अट्ठ-मिआ नत्थि नरयपुढवि त्ति । एमाइ पुणसि कूड्डु-त्तराइ इर्णिंह किमुव्वियसि ? ॥ ३५ ॥ इय चिंताए तह वे-अणाहिँ लविऊण असुहकम्माइं । जायंति रायभवणा-इएसु कमसो अ सिज्झंति ॥ ३६ ॥ अन्ने अवरुप्परकलह-भावओ तह य कोवकरणेणं । पावंति तिरिअभावं, भमंति तत्तो भवमणंतं ॥ ३७ ॥" ततो नरकदुःखेभ्यो 'निगोदाः' साधारणवनस्प-तिविशेषास्तेषां मध्ये 'अनन्तगुणितं' अनन्तगुणं, पुनः पुनर्जन्ममरणरूपं दुःखं भवति, यत उक्तं-"गोला हुंति असंखा, हुंति निगोआ असंखआ गोले । इक्किको अ निगोओ, अणंतजीवो मुणेयव्वो ॥ १ ॥ एगूलासम्मि म[ओ]उं (?) सत्तरस-याराउऽणंतखुत्तो वि । खुड्डुगभवगहणाओ, एएसु निगोयजीवेसु ॥ २ ॥" ॥ ४९ ॥

तंमि वि निगोयमज्झे, वसिओ रे जीव ! विविहकम्मवसा । विसहंतो तिक्खदुहं, अणंतपुग्गलपरावत्ते ॥५०॥

व्याख्या-'रे जीव !' हे आत्मन् ! 'तस्मिन्नपि' नारकदुःखातिशायि दुःखसङ्कुले निगोदमध्ये 'उषितः' स्थितः, कस्मात् ?, 'विविधकर्मवशात्' अनेकविध-ज्ञानावरणीयादि-कर्मपरतन्त्रतया, यत उक्तं-"जया मोहोदओ तिव्वो, अण्णाणं

खु महब्भयं । कोमलं वेयणीयं नु, तया एगिंदियत्तणं ॥ १ ॥" किं कुर्वन् तत्रोषित ? इत्याह–अनन्तान् सूक्ष्मक्षेत्रपुद्गल-परावर्तान् यावत् 'तीक्ष्णं' उग्रं 'दुःखं' एकस्मिन् श्वासोच्छ्वासे साधिकसप्तदशभवात्मकं 'विषहमाणो' अनुभवन्, उक्तं च–"सत्तरससमहिया किर, इगाणुपाणंमि हुंति खुड्डभवा । सगतीससयतिहुत्तर-पाणू पुण इगमुहुत्तंमि ॥ १ ॥ पणसट्ठिसहसपणसइ–छत्तीसा इगमुहुत्तखुड्डभवा । आवलियाणं दोसय–छप्पन्ना एगखुड्डभवे ॥ २ ॥" ॥ ५० ॥

नीहरिय कह वि तत्तो, पत्तो मणुयत्तणं पि रे जीव ! । तत्थ वि जिणवरधम्मो, पत्तो चिंतामणिसरिच्छो ॥५१॥

व्याख्या–रे जीव ! त्वं 'कथमपि' महता कष्टेन 'ततो' निगोदान्निःसृत्य 'मनुष्यत्वं' मनुजत्वमपि प्राप्त'स्तत्राऽपि' मनुष्यत्वेऽपि, चिन्तामणिसदृशो, मनोभिलाषपूरकत्वात्, श्रीजिनवरधर्मः पुण्यवशात्प्राप्तः, "निसरेर्णीहर–नील–धाड–वरहाडा" इति [ ८–४–७९ हैमप्राकृतसूत्रेण ] निःसरे नीहरादेशः ॥ ५१ ॥

पत्ते वि तंमि रे जीव !, कुणसि पमायं तुमं तयं चेव । जेणं भवंधकूवे, पुणो वि पडिओ दुहं लहसि ॥ ५२ ॥

व्याख्या–रे जीव ! 'तस्मिन्' दुष्प्रापे श्रीजिनधर्मे 'प्राप्तेऽपि' लब्धेऽपि, त्वं तमेव 'प्रमादं' निद्राविकथादिकं करोषि, येन प्रमादेन भव एवाऽन्धकूपस्तस्मिन्पुनरपि पतितो 'दुःखं' नरकादावसातमेव लभसे, आर्षवचनत्वाद्विपर्यये वर्तमानता, परं हारितं जिनधर्मं पुनर्न लप्स्यस इत्यर्थः ॥ ५२ ॥

उवलद्धो जिणधम्मो, न य अणुचिन्नो पमायदोसेणं । हा ! ! जीव ! अप्पवेरिअ, सुबहुं पुरओ विसूरिहिसि ॥५३

व्याख्या–हे जीव ! त्वया दैवयोगाज्जिनधर्म 'उपलब्धः' प्राप्तः, परं 'प्रमाददोषेण' आलस्यादिवैगुण्येन च 'नाऽनु-
चीर्णो' न सेवितो, 'हा' इति खेदे, 'आत्मवैरिन् !' स्वजीवशत्रो ! हे जीव ! 'पुरतो' मरणावसाने–परलोके वा, 'सुबहुं'
अतिशयेन, शशिराजवत् 'खेत्स्यसे' खेदं प्राप्स्यसि–शोचिष्यसीत्यर्थः, "खिदेर्जूरविसूरा"विति [ ८–४–१३२ हैम-
प्राकृतसूत्रेण ] खिदेर्विसूरादेशः ॥ ५३ ॥

सोयंति ते वराया, पच्छा समुवट्ठियंमि मरणंमि । पावपमायवसेणं, न संचियो जेहि जिणधम्मो ॥ ५४ ॥

व्याख्या–ते 'वराका' रङ्कास्तपस्विनः, पश्चात् मरणे 'समुपस्थिते' प्राप्ते सति 'शोचन्ति' शोकं कुर्वन्ति, ते के ?, यैर्व-
राकैः 'पापप्रमादवशेन' दुष्टालस्यादिपरतन्त्रतया जिनधर्मो न 'सञ्चितः' स्वात्मनि न सम्भृतो 'हा ! हा !! वयमकृत-
धर्माणः परलोके कथं सुखिनो भविष्याम' इति शोकं विदधतीति भावः ॥ ५४ ॥

धी धी धी संसारे, देवो मरिऊण जं तिरी होइ । मरिऊण रायराया, परिपच्चइ निरयजालाहिं ॥ ५५ ॥

व्याख्या–संसारं चातुर्गतिकरूपं–भवं धिग् धिग्, धिक्कयाभिधानं तु निन्द्यतमत्व सूचनार्थं, संसारस्य धिक्त्वे कारणमाह–
यस्मा'द्देवः' सुरो 'मृत्वा' च्युत्वा 'तिर्यक्' पृथिव्यादिर्भवति, तथा 'राजराजो' वासुदेवादिर्मृत्वा निरयज्वालाभिः परिपच्यते,
यत उक्तं–"मीरासु संठएसु य, कुडुसु अ पयणगेसु कुंभीसु । लोहीसु अ पलवंते, पयंति कालाउ नेरइए ॥ १ ॥" ॥५५॥

जाइ अणाहो जीवो, दुमस्स पुप्फं व कम्मवायहओ । धणधन्नाहरणाइं, घरसयणकुडुंबमिल्लेवि ॥ ५६ ॥

व्याख्या–हे जीव ! अयं 'जीव' आत्मा कर्मैव 'वातो' वायुस्तेन 'हतः' प्रतिहतो, 'अनाथो' अस्वामिको–अनाधारः सन् 'द्रुमस्य' तरोः पुष्पमिव याति, परलोकमिति गम्यते, यथा द्रुमस्य पुष्पं वातप्रेरितं सद्यात्यधः पतति, तथा जीवोऽपि, किं कृत्वा ?, धनधान्याभरणानि गृहं स्वजनकुटुम्बं च मुक्त्वा, अनुक्तोऽप्यत्र चकारो बोद्धव्यः, प्राकृतत्वाद्विभक्तिलोपश्च ॥ ५६ ॥

वसियं गिरीसु वसियं, दरीसु वसियं समुद्दमज्झम्मि । रुक्खऽग्गेसु य वसियं, संसारे संसरंतेणं ॥ ५७ ॥

व्याख्या–हे आत्मन् ! त्वया 'संसारे' भवे, 'संसरता' इतस्ततः पर्यटता सता कदाचिद् 'गिरिषु' पर्वतेषु 'उषितं' स्थितं, कदाचिद् 'दरीषु' कन्दरेषूषितं, कदाचित्समुद्रमध्ये उषितं, कदाचिद्वृक्षाग्रेषु चोषितं, अनवस्थितत्वाज्जीवस्य ॥ ५७ ॥ किञ्चाऽयमात्मा नटवद्परापररूपैः परावर्तते, ततः कः कुलाभिमानावकाश ? इत्याह—

देवो नेरइओ त्ति य, किडपयंगो त्ति माणुसो एसो । रूवस्सी य विरूवो, सुहभागी दुक्खभागी य ॥ ५८ ॥

व्याख्या–'देवो' विबुधो, नारकः प्रतीत एव, इति शब्दाः सर्वे उपप्रदर्शनार्थाश्च शब्दाः समुच्चयार्थाः स्वगतानेक भेद–सूचका वा, तथा 'कीटः' कृम्यादिः, 'पतङ्गः' शलभस्तिर्यगुपलक्षणं चैतत् 'मानुषः' पुमान्, एष जीवः, परावर्तत इति सर्वत्र क्रिया, "रूवस्सि" त्ति कमनीयशरीरो 'विरूपो' विशोभः 'सुखं' सातं भजते तच्छीलश्चेति सुखभागी, एवं दुःखभागी ५८

राउ त्ति य दमगो त्ति य, एस सपागो त्ति एस वेयविऊ। सामी दासो पुज्जो, खलो त्ति अधणो धणवइ त्ति ॥५९॥

व्याख्या–तथा 'राजा' पृथिवीपति'र्द्रमको' निःस्व, एष जीवः 'श्वपाक'श्चाण्डालः, तथैष एव 'वेदवित्' सामादिवेदानां वेत्ता–प्रधानब्राह्मण इत्यर्थः, असकृदेषशब्दग्रहणं पर्यायनिवृत्तावपि जीवद्रव्यस्याऽनुवृत्तिज्ञापनार्थं, एष एवैको नानारूपेष्वेवं परावर्तते न सर्वथाऽन्यो भवतीत्यर्थः, तथा 'स्वामी' स्वपोष्यापेक्षया नायको, 'दासो' द्व्यक्षरकः, 'पूज्यो' अभ्यर्चनीय–उपाध्यायादिः, 'खलो' दुर्जनो, 'अधनो' निर्द्रव्यो, 'धनपति'रीश्वरः ॥ ५९ ॥

नवि इत्थ कोइ नियमो, सकम्मविणिविट्ठसरिसकयचिट्ठो। अन्नान्नरूववेसो, नडो व परियत्तए जीवो ॥ ६० ॥

व्याख्या– किञ्च 'नाऽपि' न सम्भाव्यतेऽत्र कश्चि'न्नियमो'ऽवश्यम्भावो, यथा परे मन्यन्ते–"पुरुषः पुरुषत्वमश्नुते, पशवः पशुत्व"मित्यादिरूपः, प्रमाणबाधितत्वात्, कर्मवैचित्र्येण भववैचित्र्योपपत्तेः, किं तर्हि?, स्वकर्मविनिविष्टसदृशकृतचेष्टः परावर्तते जीव इति सम्बन्धः, तत्र क्रियत इति कर्म–ज्ञानावरणीयादि, स्वस्याऽऽत्मनः कर्म स्वकर्म, तस्य विनिविष्टं विनिवेशः, प्रकृतिस्थित्यनुभागप्रदेशात्मकं रचनमित्यर्थः, तस्य सदृशी–तदनुरूपा कृता–निर्वर्तिता चेष्टा–देवादिपर्यायाध्यासरूपो व्यापारो येन स तथेति समासो, दृष्टान्तमाह 'अन्यान्यरूपो' नानाऽऽकारो 'वेषो' नेपथ्यवर्णकविच्छित्त्यादिलक्षणो यस्याऽसावन्यान्यरूपवेषः, कोऽसौ?, नटः, स इव 'परावर्तते' परिभ्रमति 'जीव' आत्मेति, तदिदं संसारेऽनवस्थितत्वमालोच्यं, तथा चोक्तं–श्रीआचाराङ्गे–"से असइं उच्चागोए, असतिं नीयागोए, नो हिणे णो अतिरित्ते, णोऽपीहए, इति संखाय को गोयावादी? को माणावादी? कंसि वा एगे गिज्झे तम्हा पंडिए नो हरिसे णो कुज्झे"[एतट्टीका] "इति"

संसार्यसुमान् 'असकृद्' अनेकश 'उच्चैर्गोत्रे' मानसत्कारार्हे, उत्पन्न इति शेषः, तथाऽसकृन्नीचैर्गोत्रे' सर्वलोकावगीते, पौनःपुन्येनोत्पन्न इति, तथाहि नीचैर्गोत्रोदयादनन्तमपि कालं तिर्यक्ष्वास्त इति, स चाऽनन्ता उत्सर्पिण्यवसर्पिणीः, आवलिकाकालासख्येयभागसमयसंख्यान् पुद्गलपरावर्त्तानिति × × × तदेवमुच्चावचेषु गोत्रेष्वसकृदुत्पद्यमानेनाऽसुमता × × × न मानो विधेयो नाऽपि दीनतेति, तयोश्चोच्चावचयोर्गोत्रयोर्बन्धाध्यवसायस्थानकण्डकानि तुल्यानीत्याह-"णो हीणे णो अतिरित्ते" यावन्त्युच्चैर्गोत्रेऽनुभावबन्धाध्यवसायस्थानकण्डकानि, नीचैर्गोत्रेऽपि तावन्त्येव, तानि च सर्वाण्यप्यसुमताऽनादिससारे भूयोभूयः स्पर्शितानि, तत उच्चैर्गोत्रकण्डकार्थतयाऽसुभृन्न हीनो नाऽप्यतिरिक्तः, एवं नीचैर्गोत्रकण्डकार्थतयाऽपीति, × × × यतश्चोच्चावचेषु स्थानेषु कर्मवशादुत्पद्यन्ते, बलरूपलाभादिमदस्थानानां चाऽसमञ्जसतामवगम्य किं कर्तव्यमित्याह-"णोऽपीहए", 'अपिः' सम्भावने, स च भिन्नक्रमो, जात्यादीनां मदस्थानानामन्यतममपि 'नो ईहेताऽपि, नाऽभिलषेदपि, अथवा नो स्पृहयेन्नाऽवकाङ्क्षेदिति, तत्र यद्युच्चावचेषु स्थानेष्वसकृदुत्पन्नोऽसुमांस्ततः किमित्याह-"इति संखाय"इत्यादि, इतिरुपप्रदर्शने, इत्येतत्पूर्वोक्तनीत्योच्चावचस्थानोत्पादादिकं 'परिसंख्याय' ज्ञात्वा 'को गोत्रवादी भवेद् ?' यथा ममोच्चैर्गोत्रं सर्वलोकमाननीयं [ तथा ] नाऽपरस्येत्येवंवादी को बुद्धिमान् भवेत् ?, तथाहि-मयाऽन्यैश्च जन्तुभिः सर्वाण्यपि स्थानान्यनेकशः प्राप्तपूर्वाणीति, तथोच्चैर्गोत्रनिमित्तमानवादी वा को भवेत् ?, न कश्चित्संसारस्वभावपरिच्छेदीत्यर्थः, किञ्च "कंसि वा एगो गिज्झे" अनेकशोऽनेकस्मिन् स्थानेऽनुभूते सति तन्मध्ये कस्मिन्वा एकस्मिन्नुच्चैर्गोत्रादिकेऽनवस्थिते स्थाने रागादिविरहादेकः कथं गृध्येत् ?, तात्पर्यं-आद्येवां विदितकर्मपरिणामो विदध्याद्,

गुज्येत गार्ध्यं, यदि तत्स्थानं प्राप्तपूर्वं नाऽभविष्यत्, तच्चाऽनेकशः प्राप्तपूर्वम्, अतस्तल्लाभालाभयोर्नोत्कर्षापकर्षौ विधेयाविति,
आह च "तम्हा" इत्यादि, यतोऽनादौ संसारे पर्यटताऽसुमताऽदृष्टायत्तान्यसकृदुच्चावचानि स्थानान्यनुभूतानि, तस्मात्क-
थचिदुच्चादिकं मदस्थानमवाप्य 'पण्डितो' हेयोपादेयतत्त्वज्ञो 'न हृष्येन्न' हर्षं विदध्याद्, उक्तं च–'सर्वसुखान्यपि बहुशः,
प्राप्तान्यटता मयाऽत्र संसारे। उच्चैःस्थानानि तथा, तेन न मे विस्मयस्तेषु ॥ १ ॥ जइ सो वि णिज्जरमओ, पडिसिद्धो
अट्ठमाणमहणेहिं। अवसेसमयट्ठाणा, परिहरियव्वा पयत्तेणं ॥२॥' नाऽप्यवगीतस्थानावाप्तौ वैमनस्यं विदध्याद्, आह च–
"णो कुज्झे" अदृष्टवशात्तथाभूतलोकासम्मतं जातिकुलरूपबललाभादिकमधममवाप्य 'न कुप्येन्न' क्रोधं कुर्यात्,
कतरन्नीचस्थानं शब्दादिकं वा दुःखं मया नाऽनुभूतमित्येवमवगम्य नोद्वेगवशगेन भाव्यमुक्तं च–'अवमानात्परिभ्रं-
शा–द्वधबन्धधनक्षयात्। प्राप्ता रोगाश्च शोकाश्च, जात्यन्तरशतेष्वपि ॥ १ ॥ संते य अविम्हईउं, असोइउं पंडिएण
य असंते। सक्का हु दुमोवमियं, हियएण हियं धरंतेणं ॥ २ ॥ होऊण चक्कवट्टी, पुहुइवती विमलपंडुरच्छत्तो। सो चेव नाम
भुज्जो, अणाहसालालओ होइ ॥ ३ ॥" ॥ ६० ॥

**नरएसु वेयणाओ, अणोवमाओ असायबहुलाओ। रे जीव! तए पत्ता, अणंतखुत्तो बहुविहाओ ॥ ६१ ॥**

---

१ यदि सोऽपि निर्जरामदः, प्रतिषिद्धोऽष्टमानमथनैः। अवशेषमदस्थानानि, परिहर्तव्यानि प्रयत्नेन ॥१॥ २ सत्सु चाविस्मेतुमशोचितु पण्डितेन चाऽसत्सु। शक्यं हि द्रुमोपमितं, हृदयेन हितं धरता ॥ २ ॥ भूत्वा चक्रवर्त्ती, पृथिवीपतिर्विमलपाण्डुरच्छत्रः। स एव नाम भूयो–ऽनाथशालालयो भवति ॥ ३ ॥

व्याख्या-रे जीव ! त्वया 'अनन्तकृत्वो'ऽनन्तवारान्, 'नरकेषु' रत्नप्रभादिषु सप्तसु 'बहुविधा' अनेकप्रकारा 'अनुपमा' अनन्यसदृशा असातेन-दुःखेन बहुला- व्याप्ता वेदना- असातावेदनीयकर्मजनिताः पीडाः प्राप्ता, यत उक्तं-"नेरइया णं भंते ! कइविहं वेयणं पच्चणुभवमाणा विहरंति ?, गोयमा ! दसविहं, तंजहा-सीयं १ उसिणं २ खुहं ३ पिवासं ४ कंडूयं ५ परज्झं ६ जरं ७ दाहं ८ भयं ९ सोगं १०" [एतट्टीका]-"तत्र शीतोष्णे प्रतीते, क्षुत्पुनर्नारकाणां सदा स्थायिनी, ते हि क्षुद्वेदनादह्यमानाः सकलजगद्घृतादिपुद्गलाहारेऽपि न तृप्यन्ति, पिपासा तु नित्यं कण्ठोष्ठताल्वुजिह्वादिशोषविधायिनी सकलजलधिजलपानेऽपि नो शाम्यति, कण्डूः क्षुरकादिभिरप्यनुच्छेद्या, "परज्झं" पारवश्यं, ज्वरो यावज्जीवमत्रत्याद-नन्तगुणो, दाहभयशोका अप्यत्रत्येभ्योऽनन्तगुणा इति" ॥ ६१ ॥

देवत्ते मणुअत्ते, पराभिओगत्तणं उवगएणं । भीसणदुहं बहुविहं, अणंतखुत्तो समणुभूयं ॥ ६२ ॥

व्याख्या-रे जीव ! त्वया 'देवत्वे' देवभवप्राप्तौ, तथा 'मनुजत्वे' मनुष्यभवप्राप्तौ, 'परे' स्वस्मादन्ये-देवा मनुजाश्च, तेषां 'अभियोगत्वं' परतन्त्रत्वं, 'उपगतेन' प्राप्तेन सता पारवश्याद् 'अनन्तकृत्वो'ऽनन्तवारान् 'बहुविधं' अनेकप्रकारं 'भीषणं' भयानकं 'दुःखं' असातं 'समनुभूतं' वेदितम् ॥ ६२ ॥

तिरियगइं अणुपत्तो, भीममहावेयणा अणेगविहा । जम्मणमरणऽरघट्टे, अणंतखुत्तो परिब्भमिओ ॥ ६३ ॥

व्याख्या-हे जीव ! त्वं तिर्यग्गतिमनुप्राप्तोऽनेकविधा 'भीममहावेदना' रौद्रमहापीडा, विषहमाणः, सन्निति गम्यते,

जन्ममरणादिघट्टेऽनन्तकृत्वः 'परिभ्रान्तः' पर्यटित, उक्तं च-"तिरिया कसंकुसारा, निवायवहबंधमारणसयाइं । नवि इहयं पावंता, परत्थ जइ नियमिया हुंता ॥ १ ॥" ॥ ६३ ॥

जावंति के वि दुक्खा, सारीरा माणसा व संसारे । पत्तो अणंतखुत्तो, जीवो संसारकंतारे ॥ ६४ ॥

व्याख्या-हे आत्मन् ! संसारकान्तारे यावन्ति कान्यपि 'शारीराणि' शरीरसम्बन्धीनि 'मानसानि' मनोभवानि वा दुःखानि, तानि सर्वाण्यप्ययं जीवोऽनन्तकृत्वः प्राप्तः ॥ ६४ ॥

तण्हा अणंतखुत्तो, संसारे तारिसी तुमं आसी । जं पसमेउं सव्वो-दहीणमुदयं न तीरिज्जा ॥ ६५ ॥

व्याख्या-रे जीव ! संसारे तव तादृशी 'तृष्णा' तृषाऽनन्तवारानासीत्, नरके इति गम्यते, यां तृष्णां प्रशमितुं 'सर्वोदधीनां' सकलसमुद्राणां 'उदकं' जलं 'न शक्नुयात्' न समर्थं भवेत् ॥ ६५ ॥

आसी अणंतखुत्तो, संसारे ते छुहा वि तारिसिया । जं पसमेउं सव्वो, पुग्गलकाओ वि न तरिज्जा ॥ ६६ ॥

व्याख्या-रे जीव ! तव 'संसारे' नरकभवे, अनन्तकृत्वस्तादृशी 'क्षुधा' बुभुक्षा आसीद्, यां क्षुधां 'प्रशमितुं' निवर्तयितुं सर्वोऽपि पुद्गलकायो घृतादिरूपो न शक्नुयात् ॥ ६६ ॥

काऊणमणेगाइं, जम्मणमरणपरियट्टणसयाइं । दुक्खेण माणुसत्तं, जइ लहइ जहिच्छियं जीवो ॥ ६७ ॥

व्याख्या-हे जीव ! 'अनेकानि' अनन्तानि, जन्ममरणानां परावर्तनशतानि-कदाचिज्जन्म कदाचिन्मरणमित्येवंरू-

पाणि कृत्वा 'दुःखेन' कष्टेन, अयं 'जीव' आत्मा, यदि यद[च्छिकं]च्छया (?) 'मानुषत्वं' मनुजत्वं लभते, न तु सुखेन, कुशलपक्षकारी पुनः सुखेन मृत्वा सुखेनैव लभत इति गाथार्थः ॥ ६७ ॥

तं तह दुल्लहलंभं, विज्जुलयाचंचलं च मणुअत्तं। धम्मंमि जो विसीयइ, सो काउरिसो न सप्पुरिसो ॥ ६८ ॥

व्याख्या–तन्मनुजत्वं तथा चुल्लकादि दशोपनयव्यवस्थया 'दुर्लभलाभं' दुर्लभप्राप्तिं तथा विद्युल्लतावच्चञ्चलं च, लब्ध्वेति गम्यते, यो मनुजो 'धर्मे' जिनप्रणीते, अदृष्टवशात् प्राप्ते 'विषीदति' विषण्णो भवति, धर्मे न सम्यगनुतिष्ठतीत्यर्थः, स 'कापुरुषः' कुत्सितपुरुषो, न सत्पुरुषः ॥ ६८ ॥

मणुस्सजम्मे तडिलद्धयंमि, जिणिंदधम्मो न कओ य जेणं।
तुट्टे गुणे जह धाणुक्कएणं, हत्था मलेयव्वा अवस्स तेणं ॥ ६९ ॥

व्याख्या–मनुष्यजन्मनि संसाराम्भोनिधितटप्राये लब्धे सति येन मनुष्येण, चः पादपूरणार्थो, जिनेन्द्रधर्मोऽहिंसादिरूपो 'न कृतो' नानुचीर्णस्तेन मनुष्येण 'अवश्यं' निश्चितं, मरणावसाने हस्तौ 'मृदितव्यौ' घृष्टव्यौ, "हा! हा! मया सत्यां सामग्र्यां धर्मरूपं पाथेयं न जगृहे, अथाहं किं करोमीति", कस्मिन् केनेव?, यथा 'गुणे' प्रत्यञ्चायां त्रुटिते सति रणभूमौ 'धानुष्केण' धनुर्धरेण, हस्तौ मृदितव्यौ भवतस्तथा तेनाऽपि, मृद्नातेर्मल इत्यादेशः ॥ ६९ ॥

रे जीव ! निसुणि चंचलसहाव, मिल्हेविणु सयल वि वज्झभाव !
नवभेयपरिग्गहविविहजाल, संसारि अत्थि सहु इंदयाल ॥ ७० ॥

व्याख्या–'रे जीव !' आत्मन् !, त्वं 'शृणु' आकर्णय, किं तदित्याह 'चञ्चलस्वभावान्' चपलस्वरूपान्, सकलानपि बाह्यभावान् शरीरादीन् तथा 'नवभेदो' नवप्रकारो यः 'परिग्रहो' धनधान्यक्षेत्रवास्तुरूप्यसुवर्णकुप्यद्विपदचतुष्पदरूपस्तस्य यद् 'विविधजालं' अनेकप्रकारसमूहस्तच्च मुक्त्वा परलोके यास्यसीति गम्यते, अतः संसारे यदस्ति धनधान्यादिकं तत्सर्वं 'इन्द्रजालमिव' तन्त्रबलेनाविद्यमानवस्तुप्रकाशनमिव, इन्द्रजालं वस्तुगत्याऽसदित्यर्थः ॥ ७० ॥

पियपुत्तमित्तघरघरणिजाय, इहलोइअ सवि नियसुहसहाय ।
नवि अत्थि कोइ तुह सरणि मुक्ख !, इक्कल्लु सहसि तिरिनरयदुक्ख ॥ ७१ ॥

व्याख्या–हे 'मूर्ख !' अज्ञानिन् !–आत्मन् !, यदर्थं त्वं द्रव्याद्युपार्जने परवञ्चनादिकं कुरुषे तत्सर्वमैहलौकिकं पितापुत्रमित्रगृहगृहिणीनां 'जातं' समूहस्तव नरकादौ प्राप्तस्य 'शरणे' निर्भयत्वस्थापने, 'निजशुभसहाय' आत्मकल्याणनिमित्तं न कोऽप्यस्ति, न कोऽपि तत्र त्रातेत्यर्थः, केवलं जन्मान्तरे 'एक एव' एकाक्येव, तिर्यङ्नरकदुःखानि सहिष्यसे, ये वर्तमाने काले प्रसिद्धास्ते भूते भविष्यत्यपि भवन्तीति वचनाददुष्टः प्रयोगः ॥ ७१ ॥

कुसऽग्गे जह ओसबिंदुए, थोवं चिट्ठइ लंबमाणए। एवं मणुआण जीवियं, समयं गोयम! मा पमायए॥ ७२ ॥

व्याख्या-कुशाग्रे यथा 'अवश्यायबिन्दुकः' शरत्कालभाविश्लक्ष्णवर्षबिन्दुः, स्वार्थे कः प्रत्ययः, 'स्तोकं' अल्पं, काल-मिति गम्यते, तिष्ठति लम्बमानक, एवं मनुजानां जीवितं, अतः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ७२ ॥

संबुज्झह किं न बुज्झह ?, संबोहि खलु पेच दुल्लहा । नो हूवणमंति राइओ, नो सुलहं पुणरवि जीवियं ॥७३॥

व्याख्या-श्री सूत्रकृताङ्गे वैतालीयाध्ययने भगवानादितीर्थंकरो भरततिरस्कारागतसंवेगान् स्वपुत्रानुद्दिश्येदमाह, यदि वा सुरासुरनरोरगतिरश्चः समुद्दिश्याऽऽह, यथा-'सम्बुध्यध्वं' यूयं धर्मे बोधं कुरुत, 'किं न बुध्यध्वं ?' एवंविधसामग्र्यां सत्यां कस्माद्धर्मे बोधो न क्रियत ? इत्यर्थः, यतोऽकृतधर्माणा 'प्रेत्य' परलोके सम्बोधिर्धर्मप्राप्तिरूपा पुनर्दुर्लभा, खलु शब्दस्याऽवधारणार्थत्वात् सुदुर्लभैव, नो 'हु' निश्चये, नैवाऽतिक्रान्ता रात्रय 'उपनमन्ति' पुनर्ढौकन्ते, नह्यतिक्रान्तो यौव-नादिकालः पुनरावर्त्तत इति भावः, पुनरपि 'जीवितं' संयमजीवितं, 'नो' नैव, सुलभं, यदि वा 'जीवितं' आयुस्त्रुटितं तत्सन्धातुं न शक्यत इत्यायुषोऽनियतत्वमाह ॥ ७३ ॥

डहरा बुड्ढा य पासह, गब्भत्था वि चयंति माणवा । सेणे जह वट्टयं हरे, एवं आउखयंमि तुट्टइ ॥ ७४ ॥

व्याख्या-"डहरा" बाला एव एके-केचिज्जीवितं त्यजन्ति, तथा वृद्धाश्च, गर्भस्था अपि मानवा, उपदेशयोग्यत्वा-न्मानवग्रहणं, एतत् पश्यत यूयं, यत्सर्वास्वप्यवस्थासु प्राणी जीवितं त्यजतीति, तथाहि-त्रिपल्योपमायुष्कस्याऽपि पर्या-

ह्यनन्तरमन्तर्मुहूर्त्तेनैव कस्यचिन्मृत्युरुपतिष्ठतीत्यत्र दृष्टान्तमाह–यथा श्येनो 'वर्त्तकं' तित्तिरिजीवं 'हरते' हन्ति, एवमायुःक्षये प्राणान्मृत्युरपहरेदायुःक्षये वा त्रुट्यति जीवितम् ॥ ७४ ॥

तिहुयणजणं मरंतं, दट्ठूण नयंति जे न अप्पाणं। विरमंति न पावाओ, धिद्धी धिट्ठत्तणं ताणं ॥ ७५ ॥

व्याख्या–'त्रिभुवनजनान्' समस्तलोकान्, म्रियमाणान् दृष्ट्वा य आत्मानं प्रक्रमाद्धर्मे 'न नयन्ति' न प्रापयन्ति, तथा पापाच्च हिंसादे'र्न विरमन्ति' न निवर्तन्ते, तेषां 'धृष्टत्वं' धार्ष्ट्यं, धिग् धिक् ॥ ७५ ॥

मा मा जंपह बहुअं, जे बद्धा चिक्कणेहि कम्मेहिं। सव्वेसि तेसि जायइ, हियोवएसो महादोसो ॥ ७६ ॥

व्याख्या–खल्वेवममी पुनः पुनः प्रतिबोध्यमाना अपि किमिति न प्रतिबुध्यन्त इति 'बहु कं' बहुलं, 'मा मेति' निषेधे, 'जल्पत' वदत, यद्वा अयोग्यान् प्रत्युपदिशतो गुरून्प्रति साधूनामिदं वाक्यं–हे गुरवो ! मा मा बहुकं हितोपदेशादिकं जल्पत, कुतो ?, यतो ये प्राणिन'श्चिक्कणै'र्निबिडैः 'कर्मभि'र्ज्ञानावरणीयादिभि'र्बद्धा' आश्लिष्टा, तेषां प्राणिनां हितोपदेशो' धर्मोपदेशो महादोषो महाद्वेषो वा, दोषस्तु–"आमे घडे निहत्तं, जहा जलं तं घडं विणासेइ। इय सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥ १ ॥" इत्यादिको, दर्पान्मामप्ययमेवमनुशास्तीत्यादिरूपो द्वेषो वा 'जायते' भवति, ब्रह्मदत्तचक्रवर्त्यादिवद्, यत उक्तं–"उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये। पयःपानं भुजङ्गानां, केवलं विषवर्धनम् ॥ १ ॥" ततश्च यस्मान्निबिडकर्मणां हितोपदेशो महादोषो महाद्वेषो वा जायते तस्मात्तान् प्रति मा बहु बहु जल्पतेत्यर्थः ॥ ७६ ॥

कुणसि ममत्तं धणसय-णविहवपमुहेसुऽणंतदुक्खेसु । सिढिलेसि आयरं पुण, अणंतसुक्खंमि मुक्खंमि ॥७७॥

व्याख्या–रे मूढात्मन् ! त्वं 'अनन्तदुःखेषु' अनन्तदुःखकारणेषु, धनस्वजनविभवप्रमुखेषु, धनं–हिरण्यादिः, स्वजनो–मात्रादि, विभवो–हस्त्यश्वादिस्तत्प्रभृतिषु 'ममत्वं' ममीकारं करोषि, तथा चोक्तं श्रीआचाराङ्गे [ लोकविजयाध्ययने प्रथमोद्देशके ] "माया मे पिया मे भाया मे भगिणी मे भज्जा मे पुत्ता मे धूता मे सुण्हा मे सहिसयणसंगंथसंथुया मे विवित्तोपकरणपरियट्टणभोयणच्छायणं मे, इच्चत्थं गढिए लोए वसे पमत्ते अहो य राओ य परितप्पमाणे कालाकालसमुट्ठाई संजोगऽट्ठी अट्ठालोभी" [ एतट्टीका ]–"मातृविषयो रागः संसारस्वभावादुपकारकर्तृत्वाद्वोपजायते, रागे च सति मदीया माता क्षुत्पिपासादिकां वेदनां मा प्रापदित्यतः कृषिवाणिज्यसेवादिकां प्राण्युपघातरूपां क्रियामारभते, तदुपघातकारिणि च तस्यां वाऽकार्यप्रवृत्तायां द्वेष उपजायते, तद्यथा–अनन्तवीर्यप्रसक्तायां रेणुकायां रामस्येवेति, एवं पिता मे, पितृनिमित्तं रागद्वेषौ भवतो, यथा रामेण पितरि रागात्तदुपहन्तरि च द्वेषात्सप्तकृत्वः क्षत्रिया व्यापादिताः, सुभूमेनापि त्रिःसप्तकृत्वो ब्राह्मणा इति, भ्राता मे, भगिनी निमित्तेन च क्लेशमनुभवति प्राणी, तथा भार्यानिमित्तं रागद्वेषोद्भवस्तद्यथा–चाणाक्येन भगिनीभगिनीपत्याद्यवज्ञातया भार्यया चोदितेन नन्दान्तिकं द्रव्यार्थमुपगतेन कोपान्नन्दकुलं क्षयं निन्ये, तथा पुत्रा मे न जीवन्तीत्यारम्भे प्रवर्तते, एवं दुहिता मे दुःखिनीति रागद्वेषोपहतचेताः परमार्थमजानानस्तत्तद्विधत्ते येनैहिकामुष्मिकानपायानवाप्नोति, तद्यथा–जरासन्धो जामातरि कंसे व्यापादिते स्वबलावलेपादपसृतवासुदेवपदा-

नुसारी सबलवाहनः क्षयमगात्, स्नुषा मे न जीवतीत्यारम्भादौ प्रवर्तते, 'सखिस्वजनसंग्रन्थसंस्तुता मे' सखा–मित्रं, स्वजनः–पितृव्यादिः, सग्रन्थः–स्वजनस्याऽपि स्वजनः पितृव्यपुत्रशालादिः, सस्तुतो–भूयो भूयो दर्शनेन परिचितोऽथवा पूर्वसस्तुतो–मातृपित्रादिभिरभिहितः, पश्चात्संस्तुतः–शालकादिः, स इह ग्राह्यः, स च मे दुःखित इति परितप्यते, विविक्तं–शोभनं प्रचुरं वा, उपकरणं–हस्त्यश्वरथासनमञ्चकादि, परिवर्तनं–द्विगुणत्रिगुणादिभेदभिन्नं तदेव, भोजनं–मोदकादि, आच्छादनं–पट्टयुगादि, तच्च मे भविष्यति नष्टं वा, "इच्चत्थ"मिति, इत्येवमर्थं गृद्धो लोकस्तेष्वेव मातृपित्रादिरागादिनिमित्तस्थानेष्वामरणं, प्रमत्तो–ममेदमहमस्य स्वामी पोषको वेत्येवं मोहितमना 'वसेत्' तिष्ठेदिति, उक्तं च–'पुत्रा मे भ्राता मे, स्वजनो मे गृहकलत्रवर्गो मे। इति कृतमेमेशब्दं, पशुमिव मृत्युर्जनं हरति ॥ १ ॥ पुत्रकलत्रपरिग्रह–ममत्वदोषैर्नरो व्रजति नाशम्। कृमिक इव कोशकारः, परिग्रहाद्दुःखमाप्नोति ॥ २ ॥' × × × तदेवं कषायेन्द्रियप्रमत्तो मातृपित्राद्यर्थमर्थोपार्जनरक्षणतत्परो दुःखमेव केवलमनुभवतीत्याह च–"अहो" इत्यादि, अहश्च सम्पूर्णं रात्रिं च, च शब्दात्पक्षं मासं च निवृत्तशुभाध्यवसायः परि–समन्तात्तप्यमानः परितप्यमानः सन् तिष्ठति, तद्यथा–'कइं या वच्चइ सत्थो ?, किं भंडं ? कत्थ केत्तिया भूमी ?। को कयविक्कयकालो ?, निव्विसई किं कहिं केण ? ॥ १ ॥'[1] इत्यादि, स च परितप्यमानः किम्भूतो भवतीत्याह–'काले'त्यादि, कालः–कर्तव्यावसरस्तद्विपर्यासोऽकालः, सम्यगुत्थातुं–अभ्युद्यन्तुं शीलमस्येति समुत्थायीति पदार्थो, वाक्यार्थस्तु काले–कर्तव्यावसरे अकालेन–तद्विपर्यासेन समुत्तिष्ठतेऽभ्युद्यतमनुष्ठानं करोति, तच्छी-

---

१ कदा व्रजति सार्थः, किं भाण्डं कुत्र कियती भूमिः। कः क्रयविक्रयकालो, निर्विशति (निर्गच्छति) किं क्व केन ? ॥ १ ॥

लश्चेति, कर्तव्यावसरे न करोतीत्यन्यदा च विदधातीति, यथा वा काले करोत्येवमकालेऽपीति, यथा वाऽनवसरे न करोत्येवमवसरेऽपीति, अन्यमनस्कत्वादपगतकालाकालविवेक इति भावना, यथा प्रद्योतेन मृगापतिरपगतभर्तृका सती ग्रहणकालमतिवाह्य कृतप्राकारादिरक्षा जिघृक्षितेति, यस्तु पुनः सम्यक्कालोत्थायी भवति स यथाकालं परस्परानाबाधया सर्वाः क्रियाः करोतीति, तदुक्तं–'मासैरष्टभिरह्ना च, पूर्वेण वयसाऽऽयुषा । तत्कर्तव्यं मनुष्येण, येनाऽन्ते सुखमेधते ॥ १ ॥' धर्मानुष्ठानस्य च न कश्चिदकालो मृत्योरिवेति, किमर्थं पुनः कालाकालसमुत्थायी भवतीत्याह–"संजोगट्ठी" संयुज्यते संयोजनं वा संयोगोऽर्थः–प्रयोजनं संयोगार्थः, सोऽस्याऽस्तीति संयोगार्थी, तत्र धनधान्यहिरण्यद्विपदचतुष्पदराज्यभार्यादिः संयोगस्तेनाऽर्थी–तत्प्रयोजनी, अथवा शब्दादिविषयः संयोगो मातापित्रादिभिर्वा, तेनाऽर्थी कालाकालसमुत्थायी भवतीति, किञ्च "अट्ठालोभी" अर्थो–रत्नकुप्यादिस्तत्र आ–समन्ताल्लोभोऽर्थालोभः, स विद्यते यस्येत्यसावपि कालाकालसमुत्थायी भवति, मम्मणवणिग्वत्तथाहि–असावतिक्रान्तार्थोपार्जनसमर्थयौवनवया जलस्थलपथप्रेषितनानादेशभाण्डभृतबोहित्थगन्त्रीकोष्ट्रमण्डलिकासम्भृतसम्भारोऽपि प्रावृषि सप्तरात्रावच्छिन्नमुशलप्रमाणजलधारावर्षनिरुद्धसकलप्राणिगणसञ्चारमनोरथायां महानदीजलपूरानीतकाष्ठानि जिघृक्षुरुपभोगधर्मावसरे निवृत्तापरादोषशुभपरिणामः केवलमर्थोपार्जनप्रवृत्त इति, उक्तं च–"उक्खणइ खणइ निहणइ, रत्तिं ण सुअति दिया वि य ससंको । लिंपइ ठएइ सययं, लंछिय-

१ उत्खनति खनति निदधाति (निहन्ति), रात्रौ न स्वपिति दिवाऽपि च सशङ्कः । लिम्पति स्थगयति सततं, लाञ्छितप्रतिलाञ्छितं करोति ॥ १ ॥ मुद्रस्व न तावद्रिक्त' (निर्व्यापारो), जिमितुं नाऽपि चाद्य मङ्क्ष्यामि । नाऽपि च वत्स्यामि गृहे, कर्तव्यमिदं बह्वय ॥ २ ॥

पडिलंछियं कुणइ ॥ १ ॥ भुंजसु न ताव रिक्को, जेमेउं नवि य अज्ज मज्झीहं । न वि य वसीहामि घरे, कायवमिणं बहुं अज्ज ॥ २ ॥" अथ प्रकृतार्थो–अनन्तसौख्ये मोक्षे पुनः 'आदरं' अनुरागं, 'शिथिलयसि' शिथिलं कुरुषे, मोक्षगमनाय तद्धेतुष्वहिंसादिषु न प्रवर्तसे इति भावः ॥ ७७ ॥

संसारो दुहहेऊ, दुक्खफलो दुस्सहदुक्खरूवो य । न चयंति तं पि जीवा, अइबद्धा नेहनिअलेहिं ॥ ७८ ॥

व्याख्या–हे जीव ! अयं संसारो दुःखस्य हेतुः–कारणं, तथा दुःखमेव फलं यस्याऽसौ दुःखफलः, च पुनः 'दुस्सहं, सोढुमशक्यं यद्दुःखं तद्रूपस्तत्स्वरूपः, तमपि संसारं 'जीवाः' प्राणिनः 'स्नेहनिगडैः' प्रेमशृङ्खलाभिः 'अतिबद्धा' अतिशयेन गृहीता न त्यजन्ति, ब्रह्मदत्तादिवत्, ब्रह्मदत्तो मारणान्तिकरोगवेदनादिभिरभिभूतः सन्तापातिशयात् स्पृशन्तीं प्रणयिनीमिव विश्वासभूमिं मूर्च्छां बहुमन्यमानस्तथा हस्तीकृतो विहस्ततया, विषयीकृतो वैषम्येण, गोचरीकृतो ग्लान्या, दष्टो दुःखासिकया, क्रोडीकृतः कालेन, पीडितः पीडाभिर्निरूपितो नियत्या, आदिष्टितो दैवेन, अन्तिकेऽन्त्योच्छ्वासस्य, मुखे महाप्रयासस्य, द्वारि दीर्घनिद्राया, जिह्वाग्रे जीवितेशस्य वर्त्तमानो, विरलो वाचि, विह्वलो वपुषि, प्रचुरः प्रलापे, जितो जृम्भिकाभिरित्येवम्भूतामवस्थामनुभवन्नपि महामोहोदयाद्भोगाभिकाङ्क्षिपुः पार्श्वोपविष्टां भार्यामनवरतवेदनावशगलदश्रुरक्तनयनां कुरुमति ! कुरुमतीत्येवं व्याहरन्नधः सप्तमीं नरकपृथ्वीमगात्, तत्राऽपि तीव्रतरवेदनाऽभिभूतोऽप्यविगणय्य वेदनां तामेव कुरुमतीं व्याहरतीत्येवम्भूतो भोगाभिष्वङ्गो दुस्त्यजो भवति केषाञ्चिद्, अन्येषां पुनर्महापुरुषाणामुदारसत्त्वा-

नामात्मनोऽन्यच्छरीरमित्येवमवगततत्त्वानां सनत्कुमारादीनामिव यथोक्तरोगवेदनासद्भावे सत्यपि मयैवैतत् कृतं सोढव्यमपि मयैवेत्येवं जातनिश्चयानां कर्म क्षपणोद्यतानां न मनःपीडोत्पद्यते इति, उक्तं च–"उप्तो यः स्वत एव मोहसलिलो जन्मालवालोऽशुभो, रागद्वेषकषायसन्ततिमहानिर्विघ्नबीजस्तया। रोगैरङ्कुरितो विपत्कुसुमितः कर्मद्रुमः साम्प्रतं, सोढा नो यदि सम्यगेष फलितो दुःखैरधोगामिभिः ॥ १ ॥ पुनरपि सहनीयो दुःखपाकस्तवायं, न खलु भवति नाशः कर्मणां सञ्चितानाम्। इति सह गणयित्वा यद्यदायाति सम्यक्, सदसदिति विवेकोऽन्यत्र भूयः कुतस्त्यः ? ॥ २ ॥" ॥ ७८ ॥

नियकम्मपवणचलिओ, जीवो संसारकाणणे घोरे। का का विडंबणाओ, न पावए दुसहदुक्खाओ ॥ ७९ ॥

व्याख्या–अयं 'जीव' आत्मा 'घोरे' रौद्रे 'संसारकानने' भवकान्तारे 'निजकर्मपवनचलित' आत्मीयज्ञानावरण्यादिकर्मवायुप्रेरितो 'दुस्सह' सोढुमशक्यं दुःखं याभ्यस्ता दुस्सहदुःखा, एवंविधाः काः का 'विडम्बना' वधबन्धादिरूपाणि विगोपनानि न प्राप्नुयात् ?, अपि तु सर्वा अपि ॥ ७९ ॥

सिसिरंमि सीयलानिल-लहरिसहस्सेहि भिन्नघणदेहो। तिरियत्तणंमि रण्णे, अणंतसो निहणमणुपत्तो ॥ ८० ॥

व्याख्या–हे जीव ! त्वं 'तिर्यक्त्वे' तिर्यग्भवे 'अरण्ये' कान्तारे 'शिशिरे' शीतकाले 'शीतलानिललहरिसहस्रै'र्हैमन्तवातप्रवाहसहस्रै'र्घनं'प्रचुरं यथा स्यात्तथा 'भिन्नो' व्यथितो देहो यस्य स भिन्नघनदेहः, प्राकृतत्वाद् व्यत्ययः, एवंविधः सन् 'अनन्तशो' अनन्तवारान्, यावन्'निधनं' विनाशमनुप्राप्तः ॥ ८० ॥

गिम्हायवसंतत्तो, रण्णे छुहिओ पिवासिओ वहुसो । संपत्तो तिरियभवे, मरणदुहं वहु विसूरंतो ॥ ८१ ॥

व्याख्या–रे जीव ! त्वं तिर्यग्भवे 'अरण्ये' अरण्यान्तः पतितो, 'ग्रीष्मातपेन' उष्णकालातपेन, 'सन्तप्तः' सन्तापितः– पीडितः सन् 'वहुशो' वहून्वारान् 'क्षुधितो' वुभुक्षितः, 'पिपासित'स्तृपितो, 'वहु' अतिशयेन, खिद्यमानो मरणदुःखं सम्प्राप्तः ॥ ८१ ॥

वासासु रण्णमज्झे, गिरिनिज्झरणोदगेहि वुज्झंतो । सीआनिलडज्झविओ, मओसि तिरियत्तणे वहुसो ॥ ८२ ॥

व्याख्या–रे जीव ! त्वं अरण्यमध्ये 'तिर्यक्त्वे' तिर्यग्भवे 'वर्षासु' वर्षाकाले, गिरीणां यानि 'निर्झरणोदकानि' प्रश्रवणजलानि, तैः 'ऊह्यमान'स्ततः स्थलादन्यत्र नीयमानः 'शीतलानिलेन' हिमवातेन दग्धः सन् 'वहुशो' वारंवारं 'मृतोऽसि' पञ्चत्वं प्राप्तोऽसि ॥ ८२ ॥

एवं तिरियभवेसुं, कीसंतो दुक्खसयसहस्सेहिं । वसिओ अणंतखुत्तो, जीवो भीसणभवारण्णे ॥ ८३ ॥

व्याख्या–'एवं' पूर्वोक्तप्रकारेण तिर्यग्भवेषु जीवो दुःखशतसहस्रैः 'क्लिश्यन्' क्लेशं प्राप्नुवन् सन् अनन्तवारान् भीषणभवारण्ये 'उषितः' स्थितः ॥ ८३ ॥

दुट्ठऽट्ठकम्मपलया–निलपेरिओ भीसणंमि भवरण्णे । हिंडंतो नरएसु वि, अणंतसो जीव ! पत्तोऽसि ॥ ८४ ॥

व्याख्या–हे जीव ! त्वं 'भीषणे' भयजनके भवारण्ये 'उषितः' स्थितः, संसारकान्तारे 'दुष्टानि' दुष्टफलानि यान्यष्ट-

संख्यानि कर्माणि ज्ञानावरणीयादीनि, तान्येव 'प्रलयानिलः' प्रलयपवनस्तेन 'प्रेरितो' दोलितो 'हिण्डमानः' परिभ्रमन् सन्नरकेष्वपि 'अनन्तशो' अनन्तवारान्, प्रक्रमाद्दुःखं प्राप्तोऽसि ॥ ८४ ॥

सत्तसु नरयमहीसुं, वज्जानलदाहसीअविअणासुं। वसिओ अणंतखुत्तो, विलवंतो करुणसद्देहिं ॥ ८५ ॥

व्याख्या—रे जीव! त्वं 'सप्तसु' सप्तसंख्यासु नरकपृथ्वीषु रत्नप्रभादिषु 'वज्रानलस्य' वज्राग्नेर्'दाहस्य' उष्णस्य 'शीतस्य' च, हिमस्य, या 'वेदनाः' पीडास्तासु 'करुणशब्दैः' दयाजनकरुतैर्'विलपन्' विलापं कुर्वन् सन् 'अनन्तकृत्वो' अनन्तवारान् 'उषितः' स्थितः, नरकेषूष्णवेदनायाः शीतवेदनायाश्च स्वरूपमेवमागमज्ञाः प्रज्ञापयन्ति, तथाहि—निदाघचरमसमये नभोमध्यमधिरूढे चण्डमहसि, मेघनिर्मुक्ते नभसि, कस्यापि पुंसो अत्यन्तपित्तप्रकोपाभिभूतस्य निषिद्धातपवारणस्य सर्वतो दीप्तवह्निज्वालाकरालस्य यादृगुष्णवेदना जायते ततोऽप्युष्णवेदनेषु नरकेषु नारकाणामनन्तगुणा, अपि च यदि नारका उष्णवेदनेभ्यो नरकेभ्य उत्पाट्य ज्वलत्खादिराङ्गारराशौ प्रक्षिप्य ध्मायन्ते तदा चन्दनलिप्ता इवाऽत्यन्तसुखान्निद्रामपि लभेरन्। तथा पौषे माघे वा रात्रौ निरभ्रे नभसि हृदयादिकम्पकृति वाति मारुते हिमाचलस्थलीकृतस्थितेर्निरग्नेर्निराश्रयस्य निरावरणस्य तुषारकणसिक्ताङ्गस्य पुंसो या शीतवेदना ततोऽपि शीतवेदनेषु नरकेषु नारकाणामनन्तगुणा, किञ्च यदि नारकाः शीतवेदनेभ्यो नरकेभ्य उत्पाट्य यथोक्तपुरुषस्थाने स्थाप्यन्ते तदा ते प्राघात्यन्तनिर्वातस्थाना इव निरुपमसुखान्निद्रामप्यासादयेयुरिति ॥ ८५ ॥

पियमायसयणरहिओ, दुरंतवाहिहिँ पीडिओ बहुसो। मणुयभवे निस्सारे, विलविओ किं न तं सरसि? ॥८६॥

व्याख्या–रे जीव ! 'निस्सारे' असारे मनुष्यभवे त्वं मातृपितृस्वजनै 'रहितो' वियुक्तः, प्राकृतत्वाद्विपर्ययो, 'दुरन्तव्याधिभिः'दुःखेनान्तोऽवसानं येषां ते दुरन्ता, एवंविधा ये व्याधयस्तैः पीडितः सन् 'बहुशो'बहुभिः प्रकारै'विल(पितो)पो' विलापं कृतवान्, तं विलापं किं न 'सरसि' विचारयसि ?, अन्यत्रापि मनुष्यभवदुःखाधिकारे उक्तं–"नत्थि घरे मह दयं, विलसइ लोओ पयट्टइ च्छणुत्ति । डिंभाइ रुअंति घरे, हद्धी किं देमि ? घरणीए ॥ १ ॥ दिंति न मह ढोअं पि हु, अत्तसमिद्धीइ गविया सयणा । सेसा वि हु धणिणो परि–हवंति न हु दिंति अवगासं ॥ २ ॥ अज्ज घरे नत्थि घयं, तिल्लं लोणं च इंधणं वत्थं । जाया उ अज्ज तउणी, कल्ले किह होही ? कुडुंबं ॥ ३ ॥ वट्टइ घरे कुमारी, बालो तणओ विढप्पइ न अत्थं । रोगबहुलं कुडुंबं, ओसहमुल्लाइयं नत्थि ॥ ४ ॥ उड्डोआ मह घरणी, समागया पाहुणा बहु अज्ज । जिण्णं घरं च हट्टं, झरइ जलं गलइ सव्वं पि ॥ ५ ॥ कलहकरी मह भज्जा, असंवुडो परिअणो पहू विसमो । देसो अधारणिज्जो, एसो वच्चामि अन्नत्थ ॥ ६ ॥ जलहिं पविसेमि महिं, भमेमि धाउं धमेमि अहवा वि । विज्जं मंतं साहे–मि देवयं वा वि अच्चेमि ॥ ७ ॥ जीवइ अज्ज वि सत्तू, मओ अ इट्ठो पहू अ मह रुट्ठो । दाणिग्गहणं मग्गं–ति विहविणो कत्थ वच्चामि ? ॥ ८ ॥ इच्चाइ महाचिंता, जरगहिया णिच्चमेव य दरिद्दा। किं अणुहवंति सुक्खं?, कोसंबीनयरिविप्पुव ॥ ९ ॥" तत्कथानकमिदं–कौशाम्ब्यां सोमिलो द्विज आजन्मदरिद्रो भार्यापुत्रपुत्रिकादिकुटुम्बबहुलोऽन्यदा धनार्जनाय देशान्तरे गतः सन् वाणि-

ज्यादिव्यापाररहितं सदान-भोगं योगिनमेकमद्राक्षीत्, स च तं द्विजं चिन्तातुरं पृच्छति-का चिन्ता ?, तेनोक्तं- दारिद्र्यं चिन्ताकारि, योगी स्माह- त्वामीश्वरं करोमि, यदहं कथयामि तत्त्वया कार्यं, ततो द्वावपि पर्वतनिकुञ्जे गतौ, योगी प्राह-एष स्वर्णरसः शीतवातातपादिसहमानैः-शुष्ककन्दमूलफलाशिभिः शमीपत्रपुटैर्मील्यते, द्वाभ्यामपि ततस्तथैव गृहीतो रसः, भृतं तुम्बं[1], विनिर्गतौ वनात्, योगी स्माह-भो ! अप्रमत्तेन तुम्बकं धार्यं, दुःखेन षण्मासैर्मीलितोऽस्ति रसोऽयं, इत्येवं पुनः पुनः कथने रुष्टो विप्रो, ढोलितं तुम्बं, सागपत्रैरितस्ततः क्षिप्तो रसो गतः सर्वः, ततोऽयोग्योऽयमिति परित्यक्तः पृथिव्यां भ्रान्त्वा मृत इति ॥ ८६ ॥

पवणुव गयणमग्गे, अलक्खिओ भमइ भववणे जीवो । ठाणट्ठाणंमि समु-ज्झिऊण धणसयणसंघाए ॥ ८७ ॥

व्याख्या-हे आत्मन् ! अयं 'जीवः' प्राणी स्थाने स्थाने धनस्वजनसघातान् "समुज्झिऊण"त्ति समुज्झ्य-त्यक्त्वा भववने 'अलक्षितो' अज्ञातस्वरूपः सन् 'भ्रमति' पर्यटति, कस्मिन् क इव ?, 'गगनमार्गे' नभोवर्त्मनि पवन इव, यथा गगने 'पवनो' वातो 'अलक्षितो' अदृश्यरूपः सन् भ्रमति, तथाऽयं जीवोऽपि ॥ ८७ ॥

विंधिज्जंता असयं, जम्मजरामरणतिक्खकुंतेहिं । दुहमणुहवंति घोरं, संसारे संसरंत जिया ॥ ८८ ॥

व्याख्या-हे आत्मन् ! अमी जीवाः ससारे चातुर्गतिकरूपे 'ससरन्त' इतस्ततः पर्यटन्तः सन्तो 'असकृद्' वारंवारं

1 तुम्बकुम्भादय इति निपात्यन्ते, तुम्बमलाबु ।

'घोरं' रौद्रं 'दुःखं' असातं 'अनुभवन्ति' प्राप्नुवन्ति, किम्भूता जीवाः?, जन्मजरामरणान्येव 'तीक्ष्णा' निशिता, ये 'कुन्ताः' प्रासास्तै'र्विध्यमाना' भेद्यमाना, अत एव दुःखानुभवनं जीवानाम् ॥ ८८ ॥

तह वि खणं पि कया वि हु, अन्नाणभुअंगडंकिआ जीवा। संसारचारगाओ, न य उविज्जंति मूढमणा ॥ ८९ ॥

व्याख्या–यद्यप्येवं दुःखमनुभवन्ति तथाऽपि, 'हु'र्निश्चये, 'कदाऽपि' कस्मिन्नपि प्रस्तावे, अमी 'मूढमनसो' मूर्खा जीवा, अज्ञानमेव भुजङ्गस्तेन 'दष्टा' भक्षिता, अज्ञानान्धा इत्यर्थः, 'क्षणमपि' स्तोककालमपि, संसार एव 'चारको' गुप्तिगृहं, तस्मात् 'न चोद्विजन्ते' नोद्विग्ना भवन्ति ॥ ८९ ॥

कीलसि कियंत वेलं, सरीरवावीइ जत्थ पइसमयं। कालरहट्टघडीहिं, सोसिज्जइ जीवियंऽभोहं ॥ ९० ॥

व्याख्या–रे जीव! त्वं 'शरीरवाप्यां' देहरूपदीर्घिकायां कियतीं 'वेलां' समयं यावत् 'क्रीडिष्यसि' रंस्यसे?, कियन्तं कालं स्थास्यसीत्यर्थः, यत्र शरीरवाप्यां 'प्रतिसमयं' प्रतिक्षणं कालारघट्टघटीभि'र्जीविताम्भ ओघो' जीवितजलप्रवाहः शोष्यते, यथा वापी अरहट्टघटीभिः प्रतिसमयं निर्वास्यमानजलेन शोषमासादयति, तथेदं शरीरमपि प्रतिसमयं कालातिक्रमणेन जीवितजलशोषणाद्रिक्तं जायत इत्यर्थः ॥ ९० ॥

रे जीव! बुज्झ मा मु–ज्झ मा पमायं करेसि रे पाव!। किं परलोए गुरुदु–क्खभायणं होहिसि? अयाण! ९१

व्याख्या–'रे जीव!' आत्मन्! त्वं 'बुध्यस्व' धर्मे बोधं कुरु, 'मा मुह्य' मा मोहमाप्नुहि, 'रे पाप!' दुष्टात्मन्!, अज्ञ-

ष्टवशात्प्राप्ते धर्मे मा 'प्रमाद' मा आलस्यं कुरु, हे 'अज्ञान !' मूढ ! 'परलोके' परभवे 'गुरुदुःखानां' महदसातवेदनीय-कर्मजन्यपीडानां 'भाजनं' पात्रं किं भवसि ?, वर्तमानायां भविष्यत्प्रयोगः प्राकृतत्वात् ॥ ९१ ॥

बुज्झसु रे जीव ! तुमं, मा मुज्झसु जिणमयम्मि नाऊणं। जम्हा पुणरवि एसा, सामग्गी दुलहा जीव ! ॥९२॥

व्याख्या–रे जीव ! त्वं 'बुध्यस्व' धर्मे बोधं कुरु, 'ज्ञात्वा' यथास्वरूपमवबुध्य 'जिनमते' सर्वज्ञशासने 'मा मुह्य' मा मोहं याहि, जिनमतं सम्यक् प्रतिपद्यस्वेत्यर्थः, यस्माद् हे जीव ! 'पुनरपि' एकशः काकतालीयन्यायेन प्राप्ता विद्यते, परं भूयोऽप्येषा सामग्री–साधुश्राद्धादिरूपा, "चत्तारि परमंगाणि, दुलहाणीह जंतुणो । माणुसत्तं सुइ सद्धा, संजमम्मि य वीरियं ॥ १ ॥" इति रूपा वा, 'दुर्लभा' दुष्प्रापा, चक्रवेधवत्तथाहि–इंदपुरं नगरं, इंददत्तो राया, तस्स इट्ठाणं वराणं देवीणं बावीसं पुत्ता, अण्णे भणंति–एकाए चेव देवीए पुत्ता, ते सव्वे राइणोणं पाणसमा, अण्णा एका अमच्चधूया, सा परंपरिणंतेण दिट्ठिल्लिया, सा अण्णता कयाइ रिउण्हाता समाणी अच्छति, रायणा य दिट्ठा, [illegible] एस त्ति ?, तेहि भणितं–तुज्झ देवी एसा, ताहे सो ताए समं रत्तिं एक्कं वसितो, सा य रितुण्हाता, तीसे गब्भो लग्गो, सा य अमच्चेण भणिल्लिता–जधा तुब्भं गब्भो आहूतो भवति तदा ममं साहेज्जसु, ताए तस्स कथितं दिवसो मुहुत्तो जं च रायएण उल्लवितं सोतियंकारो[1], तेण तं पत्तए लिहितं, सो य सारवेति, णवण्हं मासाणं दारओ जातो, तस्स दासचेडाणि तद्दिवसं जाताणि,

1 सकेत ।

तेण कलायरिअस्स उवणीतो, तेण लेहाइताओ
तंजहा–अग्गियओ पव्वतओ बहुलियो सागरो य, ताणि सहजाताणि, तेण
गणियप्पधाणाओ बावत्तरिं कलाओ गाहितो, जाधे ताओ गाहिंति आयरिया ताधे ताणि तं कड्ढंति वाउल्लंति य, पुव्व-
परिचएणं ताणि रोडंति, तेण ताणि णो चेव गणिताणि, गहिताओ कलाओ, ते अ अण्णे बावीसं कुमारा गाहिज्जंता
तं आयरियं पिट्टंति, अवयणाणि भणंति, जति सो आयरियो पिट्टेति ताधे गंतूण माऊणं साहंति, ताहे ताओ आयरियं
खिंसति–कीस आहणसि ?, किं सुलभाणि पुत्तजम्माणि?, ततो ते ण सिक्खियाओ। इओ य महुराए पव्वओ राया, तस्स
सुता णिव्वुति नाम दारिया, सा रण्णो अलंकिया उवणीया, राया भणति–जो तव रोयति [ सो ते ] भत्तारो, ततो ताए
णातं–जो सूरो वीरो विक्कंतो सो मम भत्ता होउ, से पुण रज्जं दिज्जा, ताधे सा य बलवाहणं गहाय गता इंदपुरं नगरं,
तस्स इंददत्तस्स रण्णो बहवे पुत्ता ( सुएल्लिया ), इंददत्तो तुट्ठो चिंतेइ–णूणं अण्णेहिंतो राईहिंतो लट्ठो तो आगमितो,
ततो तेण उस्सितपडागं नगरं कारितं, तत्थ एक्कम्मि अक्खे अट्ठ चक्काणि, तेसिं परतो धीयल्लिया, सा अच्छिम्मि विंधि-
तव्वा, ततो इंददत्तो राया संनद्धो णिग्गतो सह पुत्तेहिं, सा वि कण्णा सव्वालंकारविभूसिया एगंमि पएसे अच्छति, सो रंगो
रायाणो, ते य दंडभडभोइया, जारिसो दोवतीए, तत्थ रण्णो जेट्ठो पुत्तो सिरिमाली णाम कुमारो, सो भणितो–पुत्त !
एसा दारिया रज्जं च घेत्तव्वं अतो विंध एतं पुत्तलियं ति, ताधे सो अकतकरणो तस्स समूहस्स मज्झे धणूं चेव गेण्हितुं
ण तरति, कहंचिऽणेण गहितं, तेण जत्तो वच्चउ तत्तो वच्चउ त्ति मुक्को सरो, सो चक्के अप्फडितूण भग्गो, एवं कस्स वि
एक्कं अरगंतरं वोलीणो, कस्सइ दोण्हि कस्सइ तिण्हि, अण्णेसिं बाहिरेणं चेव णींति, ताधे राया अधितिं पगतो, अहो ! !

अहं एतेहिं धरिसितो त्ति, ततो अमच्चेण भणितो–कीस अधितिं करेह ?, राया भणति–एतेहिं अहं अप्पधाणो कतो, अमच्चो भणति–अत्थि पुणो अण्णो तुज्झ पुत्तो मम धूताए तणओ भणाइओ सुरिंददत्तो नाम, सो समत्थो विंधेउं, अमिण्णायाणि से कहिताणि, कहिं सो ?, दरिसितो, ततो राइणा अवगूहितो भणितो–सेयं तव एए अट्ठरहचक्के भेत्तूण पुत्तलियं अच्छिम्मि विंधित्ता रज्जसुहं णिव्वुतिं दारियं संपावित्तए, ततो कुमारो जधा आणवेह त्ति भणित्तूण ठाणं ठाइत्तूण धणुं गेण्हति, लक्खाभिमुहं सरं सज्जेति, ताणि य दासरूवाणि चउद्दिसिं ठिताणि रोडंति, अण्णे य उभयतो पासिं गहितखग्गा, जति कहवि लक्खस्स चुक्कति ततो सीसं छिंदितव्वं ति, सो वि से उवज्झाओ पासे ठिओ भयं देति–मारिज्जसि जइ चुक्कसि, ते बावीसं पि कुमारा एस विंधिस्सति त्ति विसेसं उलुंठाणि विग्घाणि करेंति, ततो ताणि चत्तारि ते य दो पुरिसे बावीसं च कुमारे अगणिंतेण ताणं अट्ठण्हं रहचक्काणं अंतरे जाणिऊण तंमि लक्खे णिरुद्धाए दिट्ठीए अण्णमतिं अकुणमाणेण सा धीइल्लिया वामे अच्छिम्मि विद्धा, ततो लोकेण उक्किट्ठकलुकलुम्मिस्सो साधुक्कारो कतो, जधा तं चक्कं दुखं भेत्तुं, एवं एसा सामग्गी वि ॥ ९२ ॥

दुलहो पुण जिणधम्मो, तुमं पमायायरो सुहेसी य । दुसहं च नरयदुक्खं, कह होहिसि तं न याणामो ॥९३॥

व्याख्या–हे जीव ! अयं 'जिनधर्मः' तीर्थकृत्प्रणीतो धर्मो अहिंसादिरेकशो लब्ध इति गम्यते, पुन'र्दुर्लभो' दुष्प्रापः, त्वं च 'प्रमादाकर' आलस्यादिखानिः, आलस्याद्युपहतो हि धर्मं न प्राप्नोति, प्राप्तमपि सम्यग् नाऽनुतिष्ठति, यत उक्तं-

श्रीआवश्यकनिर्युक्तौ–"आलस्स– मोहे–ऽवण्णा, थंभा कोहा पमाय–किविणत्ता । भय–सोगा अण्णाणा,–ऽवक्खेव–
कुतूहला रमणा ॥ १ ॥ आलस्यान्न साधुसकाशं गच्छति शृणोति वा, मोहाद् गृहकर्तव्यतामूढो वा, अवज्ञातो वा–कि-
मेते विजानन्तीति, स्तम्भाद्वा–जात्याद्यभिमानात्, क्रोधाद्वा–साधुदर्शनादेव कुप्यति, प्रमादाद्वा–मद्यादिलक्षणात्, कृप-
णत्वाद्वा–दातव्यं [भविष्यति] किञ्चिदिति, भयाद्वा–नारकादिभयं वर्णयन्तीति, शोकाद्वा–इष्टवियोगजात्, अज्ञानात्–कुदृ-
ष्टिमोहतः, व्याक्षेपाद्वहुकर्तव्यतामूढः, कुतूहलान्नटादिविषयात्, रमणात्–लावकादि खेल्लुनेति गाथार्थः, एतेहिं कारणेहिं,
लद्धूण सुदुल्लहं पि माणुस्सं । न लहइ सुतिं हियकरिं, संसारुत्तारिणिं जीवो ॥ २ ॥" तथा त्वं 'सुखैपी च' ऐहिकसुख-
वाञ्छकः,नरकदुःखं च 'दुस्सह' सोढुमशक्यं, अतस्त्वं कथं भविष्यसि परलोके तन्न जानीमः ॥ ९३ ॥

अथिरेण थिरो समले–ण निम्मलो परवसेण साहीणो । देहेण जइ विढप्पइ, धम्मो ता किं न पज्जत्तं ? ॥ ९४ ॥

व्याख्या–रे जीव ! 'अस्थिरेण' अशाश्वतेन देहेन यदि 'स्थिरः' परलोकानुगामी, धर्म उपार्ज्यते तदा 'किं न
पर्याप्तं ?' किं न परिपूर्णं ?–किं न सम्पन्नमित्यर्थः, तथा 'समलेन' पुरीषप्रश्रवादिपूर्णेन देहेन 'निर्मलो' निर्दोषो धर्मो
यद्यर्ज्यते तदा किं न पर्याप्तं ?, तथा 'परवशेन' रोगाद्यायत्तेन देहेन यदि 'स्वाधीनः' स्वात्मायत्तो धर्मोऽर्ज्यते तदा
किं न पर्याप्तम् ? ॥ ९४ ॥

जह चिंतामणिरयणं, सुलहं न हु होइ तुच्छविहवाणं । गुणविहववज्जियाणं, जियाण तह धम्मरयणं पि ॥ ९५ ॥

व्याख्या–'यथा' यन प्रकारण 'चिन्तामणिरत्नं' प्रतीतं 'सुलभं' सुप्रापं 'न हु' नैव 'भवति' जायते 'तुच्छविभवानां' तुच्छः–स्वल्पो विभवः–कारणे कार्योपचाराद्विभवकारणं पुण्यं येषां ते तुच्छविभवाः–स्वल्पपुण्या इत्यर्थस्तेषां, तथाविधपशुपालवत्, तथा 'गुणा' अक्षुद्रतादयस्तेषां विशेषेण 'भवनं' सत्ता गुणविभवो, अथवा गुणा एव 'विभवो' विभूतिर्गुणविभवस्तेन 'वर्जितानां' रहितानां 'जीवानां' पञ्चेन्द्रियप्राणिनामुक्तं च–"प्राणा द्वित्रिचतुः प्रोक्ता, भूतानि तरवः स्मृताः। जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा इतीरिताः ॥ १ ॥" अपि शब्दस्य वक्ष्यमाणस्येह संबन्धादेवं भावना कार्या–एकेन्द्रियविकलेन्द्रियाणां तावद्धर्मप्राप्तिर्नाऽस्ति, पञ्चेन्द्रियजीवानामपि तद्योग्यताहेतुगुणसामग्रीविकलानां 'तथा' तेन प्रकारेण धर्मरत्नं सुलभं न भवतीति प्रकृतसंबन्ध इति, पूर्वसूचितपशुपालदृष्टान्तश्चाऽयं–"बहुविबुधजनोपेतं, हरिरक्षितमप्सरःशतसमेतम्। इह अत्थि हत्थिणपुरं, पुरं पुरन्दरपुरव्व वरं ॥१॥ तत्र श्रेष्ठिगरिष्ठः, पुन्नागो नागदेवनामाऽऽसीत्। निम्मलसीलगुणधरा, वसुंधरा गेहिणी तस्स ॥ २ ॥ तत्तनयो विनयोज्वल–मतिविभवभरो बभूव जयदेवः। दक्खो रयणपरिक्खं, सिक्खइ सो वारससमाओ ॥ ३ विजितान्यमहसममलं, विशदं सञ्चिन्तितार्थदानपटुम्। चिंतामणिं पमुत्तुं, सेसमणी गणइ उवलसमे ॥ ४ ॥ चिन्तामणिरत्नकृते, सुकृती स कृतोद्यमः पुरे सकले। हट्टं हट्टेण घरं, घरेण भमिओ अपरितंतो ॥ ५ ॥ न च तमवाप दुरापं, पितरावूचेऽथ यन्मयाऽत्र पुरे। चिंतामणी न पत्तो, तो जामि तयत्थमन्नत्थ ॥ ६ ॥ ताभ्यामभाणि वत्स!, स्वच्छमते! कल्पनैव खल्वेषा। अन्नत्थ वि कत्थइ न–त्थि एस परमत्थओ भुवणे ॥ ७ ॥ तद्रत्नैरसपत्नै–र्यथेष्टमन्यैरपि व्यवहरस्व। निम्मलकमलाकलियं, भवणं ते होइ जेणमिणं ॥ ८ ॥ इत्युक्तोऽपि स चिन्ता–र-

जासौ रचितनिश्चयश्चतुरः । वारिज्जंतो पियरे–हिं निग्गओ हत्थिणपुराओ ॥ ९ ॥ नगनगरग्रामाकर–कर्बटपत्तनपयोधि-
तीरेषु । तम्मग्गणपउणमणो, सुइरं भंतो किलिस्संतो ॥ १० ॥ तमलभमानो विमनाः, दध्यौ किं नाऽस्ति सत्यमेवेदम् ।
अहवा न तस्स चिंतं, न अन्नहा होइ सत्थुत्तं ॥ ११ ॥ इति निश्चित्य स चेतसि, निपुणं बभ्रमितुमारभत भूयः । पउ-
राउ मणिखणीओ, पुच्छापुच्छि नियच्छंतो ॥ १२ ॥ वृद्धनरेणैकेन च, सोऽभाणि यथा मणीवतीहाऽस्ति । खाणी
मणीण तत्थ य, पवरमणी पावइ सपुन्नो ॥ १३ ॥ तत्र च जगाम मणिगण–ममलमनारतमथो मृगयमाणः । एगो य तस्स
मिलिओ, पसुवालो बालिसो अहियं ॥ १४ ॥ जयदेवेन निरैक्ष्यत, वर्तुल उपलश्च करतले तस्य । गहिओ परिच्छिओ
तह, नाओ चिंतामणि त्ति इमो ॥ १५ ॥ सोऽयाचि तेन समुदा, पशुपालः प्राह किममुना कार्यम् ? । भणइ वणी सगि-
हगओ, बालाणं कीलणं दाहं ॥ १६ ॥ सोऽजल्पदीदृशा इह, ननु बहवः सन्ति किं न गृह्णासि ? । सिद्धिसुओ भणइ अहं,
समुस्सुओ नियगिहगमणे ॥ १७ ॥ तदेहि मह्यमेनं, त्वमन्यमपि भद्र ! लप्स्यसे ह्यत्र । अपरोवयारसील–त्तणेण तह
वि हु न सो देइ ॥ १८ ॥ तत एतस्याऽपि च वर–मयमुपकर्ताऽस्तु मास भूदफलः । इय करुणारसियमई–सिद्धिसुओ
भणइ आभीरं ॥ १९ ॥ यदि भद्र ! मम न दत्से, चिन्तामणिमेनमात्मनाऽपि ततः । आराहसु जेण तुहं, पि चिंतियं
देइ खलु एसो ॥ २० ॥ इतरः प्रोचे यदि स–त्यमेष चिन्तामणिर्मयाऽचिन्ति । ता बोरकयरकच्चर–पमुहं मह देउ लहु
वहुयं ॥ २१ ॥ अथ हसितविकसितमुखः, श्रेष्ठिसुतः स्माह चिन्त्यते नैवम् । किंतुववासतिगंऽतिम–रयणिमुहे लित्त-
महिवीढे ॥ २२ ॥ शुचिपट्टनिहितसिचये, स्नापितविलिप्तं मणिं निधायोच्चैः । कप्पूरकुसुममाई–हि पूइउं नमिय विहि-

पुवं ॥ २३ ॥ तदनु विचिन्त्यत इष्टं, पुरोऽस्य सर्वमपि लभ्यते प्रातः । इय सोउं सो बाले-वि छालिया गाममभिचलिओ ॥ २४ ॥ न स्थास्यति हस्ततले-ऽस्य मणिर(यं)त्नं नूनमूनपुण्यस्य । इय चिंतिय सिद्धिसुओ, वि तस्स पुट्ठिं न छड्डेइ ॥ २५ ॥ गच्छन् पथि पशुपालः, प्राह मणे ! छागिका इमा अधुना । विक्किणिय किणिय घणसा-रमाइ काहामि तुह पूयं ॥ २६ ॥ मम चिन्तितार्थपूर्त्या, सान्वयसंज्ञो भवेस्त्वमपि भुवने । एव मणिमुल्लवंते-ण तेण भणियं पुणो एयं ॥ २७ ॥ दूरे ग्रामस्तावत्, मणे ! कथां कथय काञ्चन ममाग्रे । अह न मुणसि तोऽहं तुह, कहेमि निसुणेसु एगग्गो ॥ २८ ॥ देवगृहमेकहस्तं, चतुर्भुजो वसति तत्र देवस्तु । इय पुणरुत्तं वुत्तो, वि जंपए जाव नेव मणि ॥ २९ ॥ तावदुवाच स रुष्टो, यदि हुङ्कृतिमात्रमपि न मे दत्से । ता चिंतियऽत्थसंपा-यणम्मि तुह केरिसी आसा ? ॥ ३० ॥ तच्चिन्तामणिरिति ते, नाम मृषा सत्यमेव यदि वेदम् । जं तुह सपत्तीए, वि न मह फिट्टइ मणे ! चिंता ॥ ३१ ॥ किञ्च क्षणमपि योऽहं, रत्नातङ्कैर्विना नहि स्थातुम् । सत्तो सोऽह कहमिह, उववासतिगेण न मरामि ? ॥ ३२ ॥ तन्मम मारणहेतो-र्वणिजा रे ! वर्णितोऽसि तद्गच्छ । जत्थ न दीससि इय भणि-य नंखिओ तेण सो सुमणी ॥ ३३ ॥ जयदेवो मुदितमनाः, सम्पूर्णमनोरथः प्रणतिपूर्वम् । चिंतामणिं गहित्ता, नियनयराभिमुहमह चलिओ ॥ ३४ ॥ मणिमाहात्म्यादुल्लसि-तवैभवः पथि महापुरे नगरे । रयणवइनामधूयं, परिणीय सुबुद्धिसिट्ठिस्स ॥ ३५ ॥ बहुपरिकरपरिकरितो, जननिवहैर्गीयमानसुगुणगणः । हत्थिणपुरम्मि पत्तो, पणओ पियराण चलणेसु ॥ ३६ ॥ [युग्मम्] ॥ अभिनन्दितः स ताभ्यां, स्वजनैः सम्मानितः सबहुमानैः । थुणिओ सेसजणेणं, भोगाण भायणं जाओ ॥ ३७ ॥ ज्ञातस्यास्योपनयो-ऽयमुच्चकैरमरनरकतिर्यक्षु । इयरमणीण खणीसु व,

परिब्भमंतेण कह कह वि ॥ ३८ ॥ जीवेन लभ्यत इयं, मनुजगतिः सन्मणीखनीतुल्या । तत्थ वि दुलहो चिंता-
मणिव्व जिणदेसिओ धम्मो ॥ ३९ ॥ पशुपालोऽत्र यथा खलु, मणिं न लेभेऽनुपात्तसुकृतधनः । जह पुण्णवित्तजुत्तो,
यणिपुत्तो पुण तयं पत्तो ॥ ४० ॥ तद्वदकृतगुणविभवो, जीवो लभते न धर्मरत्नमिदम् । अविकलनिम्मलगुणगण-विहव-
भरो पावइ तयं तु ॥ ४१ ॥ ( श्रीधर्मरत्नप्रकरणवृत्तौ श्रीदेवेन्द्रसूरिकृतायां ) ॥ ९५ ॥

जह दिट्ठीसंजोगो, न होइ जच्चंधयाण जीवाणं । तह जिणमयसंजोगो, न होइ मिच्छंधजीवाणं ॥ ९६ ॥

व्याख्या-यथा 'जात्यन्धानां' आजन्मतोऽन्धीभूतानां 'जीवानां' प्राणिनां 'दृष्टिसंयोग'श्चक्षुरसम्बन्धो न भवति, तथा
'मिथ्यात्वेन' कुवासनया 'अन्धा' विवेकविकला ये जीवास्तेषां 'जिनमतस्य' श्रीजिनशासनस्य 'संयोगः' प्राप्तिर्न भवति ॥९६॥

पच्चक्खमणंतगुणा, जिणिंदधम्मे न दोसलेसोऽवि । तहवि हु अन्नाणंऽधा, न रमंति कयावि तम्मि जिया ॥ ९७ ॥

व्याख्या-श्रीजिनेन्द्रधर्मे 'प्रत्यक्षं' साक्षादनन्तगुणा इहलोके यशःप्रभृतिप्राप्तिः परलोके च स्वर्गमोक्षसौख्यावाप्तिः,
नाऽस्मिन् दोषाणां-अयशःप्रभृतीनां 'लेशोऽपि' लवोऽपि, तथापि 'हुः'निश्चये 'अज्ञानेन' यथावत्स्वरूपानवबोधेन, अन्धा
जीवाः कदाऽपि 'तस्मिन्' जिनेन्द्रधर्मे 'न रमन्त एव' न धृतिं बध्नन्त्येव, अज्ञानित्वादेव ॥ ९७ ॥

मिच्छे अणंतदोसा, पयडा दीसंति नवि य गुणलेसो । तहवि य तं चेव जिया, ही !! मोहंधा निसेवंति ॥ ९८ ॥

व्याख्या-'मिथ्यात्वे' कुगुरुकुदेवकुधर्माङ्गीकाररूपाध्यवसाये अनन्तदोषा नरकपातादयः 'प्रकटाः' स्पष्टा दृश्यन्ते,

नापि च गुणस्य 'लेशो' लवो दृश्यते, 'तथापि च' एवं जानन्तोऽपि 'ही' इति विस्मये विषादे वा, 'मोहेन' अज्ञानेनाऽन्धाः सन्तो जीवास्तदेव मिथ्यात्वं 'निषेवन्ते' आश्रयन्ति ॥ ९८ ॥

धिद्धी ताण नराणं, विन्नाणे तह गुणेसु कुसलत्तं । सुहसच्चधम्मरयणे, सुपरिक्खं जे न जाणंति ॥ ९९ ॥

व्याख्या–तेषां नराणां 'विज्ञाने' शिल्पे 'कुशलत्वं' नैपुण्यं धिग् धिक्, किं तेषां शिल्पकौशलेन ?, तथा 'गुणेषु' शौर्यौदार्यधैर्यादिषु कुशलत्वं धिग् धिक्, कथं तेषां धिक्त्वमित्याह–ये पुरुषाः 'शुभं' शुभकारि, तथा 'सत्यं' सत्यरूपं, एवंविधं यद्धर्मरत्नं, तस्मिन् 'सुपरीक्षां' सत्परीक्षणं, 'न जानन्ति' नाऽवबुध्यन्ते, यथाऽयं धर्मः श्रेयान् उतायं धर्म इति परीक्षाविकलास्तेषामन्यत्र कुशलत्वमपि धिग्, यदुक्तं–"बावत्तरिकलाकुसला, पंडियपुरिसा अपंडिया चेव । सबकलाणं पवरं, जे धम्मकलं न याणंति ॥ १ ॥" ॥ ९९ ॥

जिणधम्मो य जीवाणं, अपुव्वो कप्पपायवो । सग्गापवग्गसुक्खाणं, फलाणं दायगो इमो ॥ १०० ॥

व्याख्या–रे जीव ! 'जीवानां' प्राणिनां अयं जिनधर्मश्च 'अपूर्वो' अभिनवः 'कल्पपादपः' कल्पवृक्षः, कथमपूर्वत्वं ?, इत्याह–यतः, किम्भूतः ?, स्वर्गापवर्गसौख्यानां फलानां 'दायको' दाता, अन्यो हि कल्पवृक्ष एवंविधफलानां दाता न भवति, अयं चैषामप्यतोऽन्यस्मात्कल्पपादपादयमपूर्व इति ॥ १०० ॥

धम्मो बंधु सुमित्तो य, धम्मो य परमो गुरू । मुक्खमग्गपयट्टाणं, धम्मो परमसंदणो ॥ १०१ ॥

व्याख्या–रे जीव! अयं श्रीजिनधर्मो 'बन्धुरिव' भ्रातेव, यथा भ्राता आपदि साहाय्यं ददाति तथाऽयं धर्मोऽपि भयादेः त्राता, 'च' पुनरयं धर्मः 'सुमित्रं' सुसखा, यथा सुमित्रं हितार्थसम्पादनात् सुखयति तथाऽयं धर्मोऽपि, तथाऽयं धर्मश्च 'परमः' प्रकृष्टो गुरुः, यथा गुरुरसन्मार्गान्निवर्तयति तथाऽयं धर्मोऽपि नरकतिर्यङ्मार्गान्निवारयिता, तथा 'मोक्षमार्गप्रवृत्तानां' शिवपथप्रचलितानां जीवानामयं धर्मः परमः 'स्यन्दनो' रथो, यथा स्यन्दनेन मार्गे सुखेन गम्यते तथा धर्मेणाऽपि मोक्षमार्गे प्रवृत्ताः पुरुषाः सुखेन शिवपुरीं गच्छन्ति ॥ १०१ ॥

चउगइऽणंतदुहानल–पलित्तभवकाणणे महाभीमे । सेवसु रे जीव! तुमं, जिणवयणं अमियकुंडसमं ॥ १०२ ॥

व्याख्या–रे जीव! त्वं 'महाभीमे' महारौद्रे, चतसृणां गतीनां नरकादिरूपाणामनन्तानि यानि दुःखानि तान्येव 'अनलो' वह्निस्तेन 'प्रदीप्तं' ज्वलितं यद्भवकाननं तस्मिन् 'जिनवचनं' श्रीसिद्धान्तममृतकुण्डसमं 'सेवस्व' भजस्व, सिद्धान्तोक्तमनुष्ठानं कुरुष्वेत्यर्थः ॥ १०२ ॥

विसमे भवमरुदेसे, अणंतदुहगिम्हतावसंतत्ते । जिणधम्मकप्परुक्खं, सरसु तुमं जीव! सिवसुहदं ॥ १०३ ॥

व्याख्या–हे जीव! त्वं 'विषमे' दुस्तरे, तथाऽनन्तदुःखान्येव ग्रीष्मतापस्तेन 'सन्तप्ते' उपद्रुते, एवंविधे भव एव संसार एव 'मरुदेशो' मरुस्थलं, तस्मिन् भवमरुदेशे, जिनधर्म एव कल्पवृक्षस्तं 'स्मर' विचिन्तय, रक्षकत्वेनेति, किम्भूतं जिनधर्मकल्पवृक्षं ?–'शिवसुखानि' मोक्षसौख्यानि ददातीति शिवसुखदस्तम् ॥ १०३ ॥

१ "न पूजनादिति" [ ५-४-६९, पा० ] स्वतिभ्यो न टच् ।

किं बहुणा ? जिणधम्मे, जइयव्वं जह भवोदहिं घोरं। लहु तरिउमणंतसुहं, लहइ जिओ सासयं ठाणं ॥ १०४ ॥

व्याख्या-किं, 'बहुना' बहूक्तेन ?, हे जीव! तथा 'जिनधर्मे' जिनप्रणीते धर्मे, 'यतितव्यं' प्रयत्नः कार्यो, यथा 'जीवः' स्वात्मा 'लघु' शीघ्रं 'घोरं' रौद्रमनाद्यनन्तत्वाद् भव एव 'उदधिः' समुद्रस्तं तीर्त्वा 'अनन्तसुखं' अनवसानसौख्यं शाश्वतस्थानं मोक्षलक्षणं लभते, तदवस्थायां च शरीरादिदुःखकारणाभावात् केवलं सुखभाग्भवत्यात्मा, यदुक्तं श्रीआचाराङ्गे लोकसारनाम्नि पञ्चमाध्ययने [ षष्ठोद्देशके ]-"से न दीहे न हस्से न वट्टे न तंसे न चउरंसे न परिमंडले, न किण्हे न नीले न लोहिए न हालिद्दे न सुक्किले, न सुरभिगंधे न दुरभिगंधे, न तित्ते न कडुए न कसाए न अंबिले न महुरे, न कक्खडे न मउए न गुरुए न लहुए न सीए न उण्हे न निद्धे न लुक्खे, न काऊ न रुहे न संगे न इत्थी न पुरिसे न अन्नहा, परिण्णे सन्ने, उवमा न विज्जए, अरूवी सत्ता, अपयस्स पयं नत्थि, से न सद्दे न रूवे न गंधे न रसे न फासे इति" [एतट्टीका-] (*"स-परमपदाध्यासी लोकान्तक्रोशषड्भागक्षेत्रावस्थानोऽनन्तज्ञानदर्शनोपयुक्तः संस्थानमाश्रित्य न दीर्घो न ह्रस्वो न वृत्तो न त्र्यस्रो न चतुरस्रो न परिमण्डलो, वर्णमाश्रित्य न कृष्णो न नीलो न लोहितो न हारिद्रो न शुक्लो, गन्धमाश्रित्य न सुरभिगन्धो न दुरभिगन्धो, रसमाश्रित्य न तिक्तो न कटुको न कषायो नाम्लो न मधुरः, स्पर्शमाश्रित्य न कर्कशो न मृदुर्न लघुर्न गुरुर्न शीतो नोष्णो न स्निग्धो न रूक्षो ) "न काऊ" इत्यनेन लेश्या गृहीता, यदिवा न कायवान्, (*यथा वेदान्तवादिनां-'एक एव मुक्तात्मा, तत्कायमपरे क्षीणक्लेशा अनुप्रविशन्ति, आदित्यरश्मय इवांशु-

* शोधनार्थं संगृहीतेषु चतुर्ष्वप्यादर्शेषु त्रुटितोऽस्त्यत्र वृत्तिपाठः, अतोऽयं कौंसस्थः पाठस्तत उद्धृत इति।

मन्तमिति' तथा न, "रुह" बीजजन्मनि प्रादुर्भावे च, रोहतीति रुहः, न रुहोऽरुहः, कर्मबीजाभावादपुनर्भावीत्यर्थः, न पुनर्यथा शाक्यानां दर्शननिकारतो मुक्तात्मनोऽपि पुनर्भवोपादानमिति, उक्तं च–'दग्धेन्धनः पुनरुपैति भवं प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठं । मुक्तः स्वयं कृतभवश्च परार्थशूर–स्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥ १ ॥' तथा न विद्यते सङ्गोऽमूर्तत्वादस्य स तथा, न स्त्री न पुरुषो ) न 'अन्यथे'ति [न] नपुंसकः, "परिण्णे" इति केवलं सर्वैरात्मप्रदेशैः परिसमन्ताद्विशेषतो जानातीति परिज्ञः, तथा सामान्यतः सम्यग् जानातीति–पश्यतीति संज्ञः, ज्ञानदर्शनयुक्त इत्यर्थः, यदि नाम स्वरूपतो न ज्ञायते मुक्तात्मा तथाप्युपमाद्वारेणाऽऽदित्यगतिरिव ज्ञायत एवेति चेत्तन्न, यत आह–"उवमा ण विज्जए" उपमीयते–सदृशात्परिच्छिद्यते यया सा उपमा–तुल्यता, सा मुक्तात्मनस्तज्ज्ञानसुखयोर्वा न विद्यते, लोकातिगत्वात्तेषां, कुत एतदिति चेदाह–"अरूवी सत्ता" तेषां मुक्तात्मनां या सत्ता साऽरूपिणी, अरूपित्वं च दीर्घादिप्रतिषेधेन प्रतिपादितमेव, किञ्च "अपयस्स" इत्यादि, न विद्यते पदं–अवस्थाविशेषो यस्य सोऽपदस्तस्य, पद्यते–गम्यते येनाऽर्थस्तत्पदम्–अभिधानं, तच्च 'नाऽस्ति' न विद्यते, वाच्यविशेषाभावात्, तथाहि–योऽभिधीयते स शब्दरूपरसगन्धस्पर्शान्यतरविशेषेणाऽभिधीयते, तस्य च तदभाव इत्येतद्दर्शयितुमाह–"से ण सद्दे" इत्यादि, 'स' मुक्तात्मा न शब्दरूपो न रूपात्मा न गन्धो न रसो न स्पर्श इत्येतावन्त एव वस्तुनो भेदाः स्युः, तत्प्रतिषेधाच्च नापरः कश्चिद्विशेषः सम्भाव्यते येनाऽसौ व्यपदिश्येतेति भावार्थः" [इत्याचाराङ्गवृत्तौ] ॥ १०४ ॥

ते धन्ना ते साहू, तेसिं च नमो अकज्जपडिविरया । धीरा वयमसिहारं, चरंति जह थूलभद्दमुणी ॥ १०५ ॥

( ते धन्यास्ते साधवः, तेषां च नमः (ये) अकार्यप्रतिविरताः । धीरा व्रतमसिधारं, चरन्ति यथा स्थूलभद्रमुनिः )

इति श्रीवैराग्यशतकं सटीकम् ॥

ग्रन्थकृत्प्रशस्तिः—

श्रीगुरुखरतरगच्छे, श्रीमज्जिनचन्द्रसूरिराजानां । राज्ये विराजमाने, मुनिवार्धिरसेन्दुमितवर्षे (१६४७) ॥ १ ॥ श्रीक्षेमराजाभिधपाठकानां, शिष्या विशिष्य क्षमया क्षमाभाः । क्षमाधराक्षोभ्यविनेयवृन्दाः, श्रीवाचकाः कीर्तिमहीजकन्दाः ॥२॥ प्रमोदमाणिक्यसुनामधेया-स्तेषां च सन्त्यद्भुतभागधेयाः । शास्त्रार्थसर्वस्वकलापविज्ञा, जयन्ति सुज्ञा जयसोमसंज्ञाः ॥ ३ ॥ तेषां शिष्येणेयं, गुणविनयाख्येन निर्ममे व्याख्या । काऽपि यथादर्शमणु-स्त्वरितं वैराग्यशतकस्य ॥४॥ यद्यत्प्राकृतसूत्रे-र्न मिलति तत्रापि पूर्वसूरिगिरां । प्रामाण्यादिति विबुधैः, सर्वं सत्यं समाधेयम् ॥ ५ ॥

इति श्रीभववैराग्यशतकं सम्पूर्णम् ।

ग्रन्थाग्रं ९९५ । यथाप्रति संवत् १६६२ वर्षे कार्तिकवदिपक्षी भृगुलिखितं ।

---

सर्वत्र यो मोहनलालजीति, प्राप्तः प्रसिद्धिं परमां महात्मा । स्वर्गं गतं सच्चरितं पवित्रं, नमामि नित्यं मुनिमोहनं तम् ॥१॥

नमोऽस्तु श्रमणाय भगवते श्रीमन्महावीराय

प्रवचनप्रभावकश्रीमज्जिनदत्त-कुशल-सूरीश्वर-मोहनयशःकेशरपादपद्मेभ्यो नमः ।

श्रीमल्लक्ष्मीलाभगणिवरविनिर्मितं

# वैराग्यरसायनप्रकरणम् ।

संसारविउलसायर-निवडियजीवाण उद्धरणधीर ! । सिरिवीरनाहजिणवर !, पणयपुरंदर ! नमो तुज्झ ॥ १ ॥
संवेगरयणखाणीण, पाए पणमित्तु सव्वसूरीणं । विरएमि पगरणमहं, वेरग्गरसायणं नाम ॥ २ ॥
वेरग्गं इह हवई, तस्स य जीवस्स जो हु भवभीरू । इयरस्स पुणो वेरग्ग-रंगवयणं पि विससरिसं ॥ ३ ॥

---

संसारविपुलसागर-निपतितजीवानां उद्धरणधीर ! । श्रीवीरनाथजिनवर !, प्रणतपुरन्दर ! नमस्तुभ्यम् ॥ १ ॥
संवेगरत्नखनीनां, पादान् प्रणम्य सर्वसूरीणां । विरचयामि प्रकरणमहं, वैराग्यरसायनं नाम ॥ २ ॥
वैराग्यमिह भवति, तस्य च जीवस्य यः खलु भवभीरुः । इतरस्य पुनर्वैराग्य-रङ्गवचनमपि विषसदृशम् ॥ ३ ॥

वेरग्गं खलु दुविहं, निच्छयववहाररूवमिह वुत्तं । निच्छयरूवं तं चिय, जं तिगरणभाववु[सु]द्धीए ॥ ४ ॥
ववहारवेरग्गं जं, पररंजणकयम्मि किज्जइ य । तं पि हु कोडाकोडी-वारं लद्धं च जीवेण ॥ ५ ॥
अहवावि होइ दुविहं, निसग्गुवएसभेयसंभिन्नं । संवेगं सिवकारण-भूयं परमत्थजुत्तीए ॥ ६ ॥
निसग्गं[खलु]दुभेयं, बाहिरपच्चयं अबाहिरं चेव । पत्तेयबुद्धसिद्धाण, सयंसंबुद्धाण तं जाण ॥ ७ ॥
उवएसं वेरग्ग-जुयभेयविसुद्धमुत्तमं सुत्ते । बहुसवणमबहुसवणं, सुगुरुसमीवे हवई तं च ॥ ८ ॥
निम्मलमणपुहवी-रुहो य जिणधम्मनीरपरिसित्तो । सिवसुहफलभरनमिओ, संवेगतरू जये जयऊ ॥ ९ ॥
रे जीव ! मोहपासेण, अणाइकालाओ वेढिओऽसि तुमं । इय नाऊण सम्मं, छिंदसु तं नाणखग्गेण ॥ १० ॥

---

वैराग्यं खलु द्विविधं, निश्चयव्यवहाररूपमिहोक्तं । निश्चयरूप तदेव, यत्रिकरणभाववु[शु]द्ध्या ॥ ४ ॥
व्यवहारवैराग्यं यत्, पररञ्जनकृते क्रियते च । तदपि खलु कोटाकोटी-वारं लब्धं च जीवेन ॥ ५ ॥
अथवाऽपि भवति द्विविधं, निसर्गोपदेशभेदसम्भिन्नं । संवेगः शिवकारण-भूतं परमार्थयुक्त्या ॥ ६ ॥
निसर्गं [खलु] द्विभेदं, बाह्यप्रत्ययं अबाह्यं चैव । प्रत्येकबुद्धसिद्धानां, स्वयंसम्बुद्धानां तज्जानीहि ॥ ७ ॥
उपदेशो वैराग्य-युतभेदविशुद्धमुत्तमं सूत्रे । बहुश्रवणमबहुश्रवणं, सुगुरुसमीपे भवति तच्च ॥ ८ ॥
निर्मलमनःपृथिवी-रुहश्च जिनधर्मनीरपरिसिक्तः । शिवसुखफलभरनमितः, संवेगतरुर्जगति जयतु ॥ ९ ॥
रे जीव ! मोहपाशेन, अनादिकालतो वेष्टितोऽसि त्वं । इति ज्ञात्वा च सम्यक्, छिन्दि तं ज्ञानखड्गेन ॥ १० ॥

नरखित्तदीहकमले, दिसादलड्ढे वि नागनालिल्ले । निचं पि कालभमरो, जणमयरंदं पियइ बहुहा ॥ ११ ॥
कोहानलं जलंतं, पज्जालंतं सरीरतिणकुडीरं । संवेगसीयसीयल-खमाजलेणं च विज्झवह ॥ १२ ॥
तनुगहणवणुप्पन्नं, उम्मुलंतविवेयतरुमणहं । मिउभावअंकुसेणं, माणगयंदं वसीकुणह ॥ १३ ॥
जा अइकुडिला डसइ, अप्पापुरिसं च विस्सदोहयरा । अज्जवमहोरगेणं, तं मायासप्पिणिं जिणह ॥ १४ ॥
सुहं देहसिरियराओ, जीयनिवइणो य गुणगणनिहाणं । गिण्हंतं हो ! साहह, तण्हाचोरं महाघोरं ॥ १५ ॥
इच्छानिरोहमुग्गर-पहारपूरेण लोहगुरुकुंभं । तह संचुन्नह विबुहा !, पुणोवि न जह तारिसो होइ ॥ १६ ॥
देहुज्जाणाओ वि य, नीहरमाणं च मोहवेयालं । अन्नाणजणणिपुत्तं, कीलह वेरग्गमंतेण ॥ १७ ॥

---

नरक्षेत्रदीर्घकमले, दिशादलाढ्येऽपि नागनालीके । नित्यमपि कालभ्रमरो, जनमकरन्दं पिबति बहुधा ॥ ११ ॥
क्रोधानलं ज्वलन्तं, प्रज्वालयन्तं शरीरतृणकुटीरं । सवेगशीतशीतल-क्षमाजलेन च विध्यापयत ॥ १२ ॥
तनुगहनवनोत्पन्नं, उन्मूल्यमानविवेकतरुमनघं । मृदुभावअङ्कुशेन, मानगजेन्द्रं वशीकुरुत ॥ १३ ॥
या अतिकुटिला दशति, आत्मपुरुषं च विश्वद्रोहकरी । आर्जवमहोरगेण, तां मायासर्पिणीं जयत ॥ १४ ॥
सुखं देहश्रीगृहाद्, जीवनृपतेश्च गुणगणनिधानं । गृह्णन्तं भोः ! साधयत, तृष्णाचोरं महाघोरम् ॥ १५ ॥
इच्छानिरोधमुद्गर-प्रहारपूरेण लोभगुरुकुम्भं । तथा सञ्चूर्णयत विबुधाः !, पुनरपि न यथा तादृशो भवति ॥ १६ ॥
देहोद्यानादपि च, निस्सरमाणं च मोहवेतालं । अज्ञानजननीपुत्रं, कीलयत वैराग्यमन्त्रेण ॥ १७ ॥

चउविहकसायरुक्खो, हिंसादढमूलविसयबहुसाहो । जम्मजरामरणफलो, उम्मुलेयव्वो य मूलाओ ॥ १८ ॥
भीमम्मि भवसमुद्दे, पडिया कीसंति पाणिणो मूढा । न सरंति निरुयवेरग्ग–बंधवं बंधणविमुक्कं ॥ १९ ॥
करुणाकमलाइन्ने, आगमउज्जलजलेण पडिपुन्ने । बारस भावणहंसे, झीलह वेरग्गपउमदहे ॥ २० ॥
कल्लोलचयललच्छी, सयणाणं संगमा सुविणतुल्ला । तडिदिव चलं वियाणह, जुव्वणदेहं जरागेहं ॥ २१ ॥
सिद्धिपुरबारअग्गल–सरिसं उज्झिय ममत्तभावं खु । तण्हामहाऽहिमंतं, चिंतसु निम्ममत्तणं धीर ! ॥ २२ ॥
इंदाइया य देवा, मरंति कालेण पीडियाऽसरणा । ता तुज्झ मरणकाले, होही को नाम सरणं च ? ॥ २३ ॥
पियमायभायपरियण–जणेसु पासंतएसु रे जीव ! । जममंदिरं नीओ, अत्ताणो सकयकम्मेहिं ॥ २४ ॥

---

चतुर्विधकषायवृक्षो, हिंसादृढमूलविषयबहुशाखः । जन्मजरामरणफल, उन्मूलयितव्यश्च मूलतः ॥ १८ ॥
भीमे भवसमुद्रे, पतिता क्लिश्यन्ते प्राणिनो मूढाः । न स्मरन्ति नीरुजवैराग्य–बान्धवं बन्धनविमुक्तम् ॥ १९ ॥
करुणाकमलाकीर्णे, आगमोज्ज्वलजलेन प्रतिपूर्णे । द्वादशभावनाहंसे, स्नात वैराग्यपद्मद्रहे ॥ २० ॥
कल्लोलचपलालक्ष्मीः, स्वजनानां सङ्गमाः स्वप्नतुल्याः । तडिदिव चलं विजानीत, यौवनदेहं जरागेहम् ॥ २१ ॥
सिद्धिपुरद्वारअर्गला–सदृशं उज्झित्वा ममत्वभावं खलु । तृष्णामहाऽहिमन्त्रं, चिन्तय निर्ममत्वं धीर ! ॥ २२ ॥
इन्द्रादिकाश्च देवा, म्रियन्ते कालेन पीडिता अशरणाः । ततस्तव मरणकाले, भविष्यति को नाम शरणं च ? ॥ २३ ॥
पितृमातृभ्रातृपरिजन–जनेषु पश्यत्सु रे जीव ! । यममन्दिरं नीत, अत्राणः [ अशरणस्सन् ] स्वकृतकर्मभिः ॥ २४ ॥

जइ सुत्तो ता मुत्तो, कालपिसाएण गसियलोएणं। मा मा वीससहसु तुमं, रागद्दोसाण सत्तूणं ॥ २५ ॥
गहिऊण सव्वविरइं, अणुव्वयाइं च चत्तुमिच्छेसि। विसयवसेण कायर !, इय लज्जा तुज्झ अइगरुई ॥ २६ ॥
परिहर कुमित्तसंगं, जस्स य संगाओ हवसि चलचित्तो। वाएण हीरमाणो, दुमुव्व कुरु साहुसंसग्गं ॥ २७ ॥
कारागिहम्मि वासो, सीसे घाओ वि होउ खग्गस्स। लग्गउ मम्मे वाणो, मा संगो होउ कुगुरुस्स ॥ २८ ॥
वरनाणकिरियचक्कं, तवनियमतुरंगमेहिं परिजुत्तं। संवेगरहं आरुहिय, वचह निव्वाणवरणयरं ॥ २९ ॥
दुक्खमहाविसवल्लिं, भूरिभवभमणपावतरुचडियं। वेरग्गकालकरवाल-तिक्खधाराहिं कप्पेसु ॥ ३० ॥
संवेगमहाकुंजर-खंधे चडिऊण गहिवि तवचक्कं। घणकम्मरायसेण्णं, निद्दलह समाहिमणुहवह ॥ ३१ ॥

---

यदि सुप्तस्ततो मुक्तः, कालपिशाचेन ग्रसितलोकेन। मा मा विश्वसिहि त्वं, रागद्वेषयोः शत्रोः ॥ २५ ॥
गृहीत्वा सर्वविरतिं, अणुव्रतानि च त्यक्तुमिच्छसि। विषयवशेन कातर !, इति लज्जा तवातिगुरुकी ॥ २६ ॥
परिहर कुमित्रसङ्गं, यस्य च सङ्गाद् भवसि चलचित्तः। वातेन ह्रियमाणो, द्रुम इव कुरु साधुसंसर्गम् ॥ २७ ॥
कारागृहे वासः, शीर्षे घातोऽपि भवतु खड्गस्य। लगतु मर्मे वाणः, मा सङ्गो भवतु कुगुरोः ॥ २८ ॥
वरज्ञानक्रियाचक्रं, तपोनियमतुरङ्गैः परियुक्तं [ योजितं ]। संवेगरथमारुह्य, व्रजत निर्वाणवरनगरम् ॥ २९ ॥
दुःखमहाविषवल्लिं, भूरिभवभ्रमणपापतरुचटितां। वैराग्यकालकरवाल-तीक्ष्णधाराभिः कर्त्तय ॥ ३० ॥
संवेगमहाकुञ्जर-स्कन्धे चटित्वा गृहीत्वा तपश्चक्रं। घनकर्मराजसैन्यं, निर्दलयत समाधिमनुभवत ॥ ३१ ॥

पंचिंदियचलतुरए, पइदिवसं कुप्पहम्मि धावंते । सुयरज्जुणा निगिण्हिय, बंधह वेरग्गसंकुम्मि ॥ ३२ ॥
अप्पसराओ जाए, दंसणवित्थिण्णनाणपरिकलिए । वेरग्गमहापउमे, समाहिभसलो झुणज्झुणउ ॥ ३३ ॥
जइ सुद्धभावणाए, जीवपुरिसेण पत्थिओ होई । संवेगकप्परुक्खो, किं किं न हु वंछियं देइ ॥ ३४ ॥
दोससयगग्गरीणं, विरत्तविसवल्लरीण नारीणं । जइ इच्छह संवेगं, ता संगं चयह तिविहेणं ॥ ३५ ॥
समए समए आऊ, सयं च विहडइ न वड्ढए अहियं । परिअडइ कायलग्गो, कालो छायामिसेणं ते ॥ ३६ ॥
किं किं न कयं तुमए, किं किं कायव्वं न अहुणावि । तं किमवि कुणसु भायर !, जेणऽप्पा सिद्धिपुरमेइ ॥३७॥
उअरस्स कए को को, न पत्थिओ? इत्थ मइ निलज्जेणं । तं किमवि कयं न सुकयं, जेण कएणं सुहि होमि ॥३८॥

---

पञ्चेन्द्रियचलतुरगान्, प्रतिदिवसं कुपथे धावतः । श्रुतरज्जुना निगृह्य, बध्नीत वैराग्यशङ्कौ ॥ ३२ ॥
आत्मसरसो जाते, दर्शनविस्तीर्णज्ञानपरिकलिते । वैराग्यमहापद्मे, समाधिभ्रमरो झुनज्झुनतु [अव्यक्तशब्दं करोतु] ॥ ३३ ॥
यदि शुद्धभावनया, जीवपुरुषेण प्रार्थितो भवति । संवेगकल्पवृक्षः, किं किं न खलु वाञ्छितं ददाति ॥ ३४ ॥
दोषशतगर्गरीणां, विरक्तविषवल्लरीणां नारीणां । यदि इच्छत संवेगं, ततस्सङ्गं त्यजत त्रिविधेन ॥ ३५ ॥
समये समये आयुः, स्वयं च विघटते न वर्धतेऽधिकं । पर्यटति कायलग्नः, कालश्छायामिषेण तव ॥ ३६ ॥
किं किं न कृतं त्वया, किं किं कर्त्तव्यं न अधुनाऽपि । तत् किमपि कुरु भ्रातः !, येनात्मा सिद्धिपुरमेति ॥ ३७ ॥
उदरस्य कृते कस्को, न प्रार्थितोऽत्र मया निर्लज्जेन । तत् किमपि कृतं न सुकृतं, येन कृतेन सुखी भवामि ॥ ३८ ॥

परिहरह वेरभावं, अट्टं रुद्दं च वोसिरह ॥ ३९ ॥
सयेसु वि जीवेसु, मित्तीतत्तं करेह गयमोहो । पावमलवारिपूरं, सासयसंवेगं अब्भसह ॥ ४० ॥
सयलसमाहिनिहाणं, वियरियभवियणसमूहथिरठाणं । जीवनरिंदपमुइयं, नंदउ वेरग्गपट्टणयं ॥ ४१ ॥
खंतिपायारमंडिय-महिंसगोउरं तं उज्जमकवाडं । तं किर अहलं नेयं, ऊसरखित्तम्मि वीयं व ॥ ४२ ॥
संवेगविणा जं किंपि, पालिज्जइ वयणमणुवयं भाय ! । ता पालह जीवदयं, जिणसासणपुत्तिसाविर्त्ति ॥ ४३ ॥
जइ इच्छह परमपयं, अहवा कम्मक्खयं च वा तत्तं । सच्चं पि य मा भासह, जं परपीडाकरं होई ॥ ४४ ॥
मा भणह अलियवयणं, सुणिऊणं वसु-वसुहवईचरियं । कोसियमुणिवि सुत्तस्स, भणियं आणं तहा कुणह ॥ ४५ ॥
लोएवि जं सुणिज्जइ, सच्चं भासंतओ गओ नरयं ।

---

सर्वेष्वपि जीवेषु, मैत्रीतत्त्वं कुरुत गतमोहः । परिहरत वैरभावं, आर्त्तं रौद्रं च व्युत्सृजत ॥ ३९ ॥
सकलसमाधिनिधानं, वितरितभविजनसमूहस्थिरस्थानं । पापमलवारिपूरं, शाश्वतसंवेगं अभ्यस्यत ॥ ४० ॥
क्षान्तिप्राकारमण्डितं, अहिंसागोपुरं तदुद्यमकपाटं । जीवनरेन्द्रप्रमुदितं, नन्दतु वैराग्यपट्टनकम् ॥ ४१ ॥
संवेगं विना यत् किमपि, पाल्यते वचनमणुव्रतं भ्रातः ! । तत् किल अफलं ज्ञेयं, ऊषरक्षेत्रे बीजमिव ॥ ४२ ॥
यदि इच्छत परमपदं, अथवा कर्मक्षयं च वा तत्त्वं । ततः पालय जीवदयां, जिनशासनपुत्रीसावित्रीम् ॥ ४३ ॥
मा भणत अलीकवचनं, श्रुत्वा वसु-वसुधापतिचरितं । सत्यमपि मा भाषत, यत्परपीडाकरं भवति ॥ ४४ ॥
लोकेऽपि यच्छ्रूयते, सत्यं भाषयन् गतो नरकं । कौशिकमुनिरपि सूत्रस्य, भणितां आज्ञां तथा कुरुत ॥ ४५ ॥

जेण परो दुम्मिज्जइ, पाणिवहो जेण होइ भणिएणं। अप्पा पडइ किलेसे, न हु तं भासंति गीयत्था ॥ ४६ ॥
वज्जइ अदत्तगहणं, वहबंधणदायगं च अयसकरं। संवेगवुद्धिपत्ता, सत्ता न रमंति अत्ताहे ॥ ४७ ॥
जं नियदेहं सीमं-तिणीण (जूहं?) दट्ठूण रागमुव्वहइ। तस्स य देहस्स पुणो, किंचिवि अहमत्तणं सुणउ तुमं ॥४८॥
जोणीमुहनिप्फिडिए, थणगच्छीरेण वड्ढिए जाए। पगइए अमिज्झमए, एरिसदेहम्मि को रागो? ॥ ४९ ॥
हा!! असुइसमुप्पण्णया, निग्गया य तेण चेव बारेणं। सत्ता मोहपसत्तया य, रमंति तत्थेव असुइदारम्मि ५०
नो जाणंति वराया, राएणं कलिमलस्स निद्धमणं। तत्थेव दिंति रागं, दुगंछणिअम्मि जोणीए ॥ ५१ ॥
सोणियसुक्कोवण्णे, अमिज्झमइयम्मि वच्चसंघाये। रागो न हु कायव्वो, विरागमूले सरीरम्मि ॥ ५२ ॥

---

येन परो दूयते, प्राणिवधो येन भवति भणितेन। आत्मा पतति क्लेशे, न खलु तं भाषन्ते गीतार्थाः ॥ ४६ ॥
वर्जयतादत्तग्रहणं, वधबन्धनदायकं च अयशस्करं। संवेगवुद्धिप्राप्ताः, सत्त्वा न रमन्ते आत्मघ्ने[आत्मगुणहन्तर्यदत्ते] ॥४७॥
यन्निजदेहं सीम-न्तिनीनां (यूथं?) दृष्ट्वा रागमुद्वहति। तस्य च देहस्य पुनः, किञ्चिदपि अधमत्वं शृणु त्वम् ॥ ४८ ॥
योनिमुखनिष्फिटिते, स्तनकक्षीरेण वर्द्धिते जाते। प्रकृतितोऽमेध्यमये, एतादृशे देहे को रागः? ॥ ४९ ॥
हा!! अशुचिसमुत्पन्नका, निर्गता च तेन चैव द्वारेण। सत्त्वा मोहप्रसक्तकाश्च, रमन्ते तत्रैव अशुचिद्वारे ॥ ५० ॥
नो जानन्ति वराका, रागेण कलिमलस्य [अशुचेः] निर्द्धमनं। तत्रैव ददति रागं, जुगुप्सनीयायां योनौ ॥ ५१ ॥
शोणितशुक्रोत्पन्ने, अमेध्यमये वर्चसङ्घाते। रागो न खलु कर्त्तव्यो, विरागमूले शरीरे ॥ ५२ ॥

कोरागो ?५३

कागसुणगेहिं भक्खे, किमिकुलभक्खे य वाहिभक्खे य। देहम्मि मच्चुभक्खे, सुसाणभक्खम्मि को रागो ?५३

कागसुणगेहिं भक्खे, किमिकुलभक्खे य वाहिभक्खे य। देहम्मि मच्चुभक्खे, सुसाणभक्खम्मि
दंतमलकण्णगूहक-सिंघाणगलालपूरिए दुट्ठे । निच्चं असासयम्मि, खणमवि मा रमह देहम्मि ॥ ५४ ॥
पिच्छसि मुहं सनिलयं, सविसेसं राइएण अहरेण। सकडक्खं सवियारं, तरलच्छि जुव्वणारंभे ॥ ५५ ॥
पिच्छसि बाहिरमट्ठं, न पिच्छसि अंतरंगमुद्दिट्ठं। कामेण मोहिओ तुं, हा हा !! होहिसी कथं मूढ ! ॥ ५६ ॥
पाडलचंपगमल्लिय-अगुरुयचंदणतुरुक्कवामीसं । गंधं समोयरंतो, मुद्धो मन्नइ सुगंधोऽहं ॥ ५७ ॥
अच्छिमलो कन्नमलो, खेलो सिंघाणओ अ पूओ य। असुईमुत्तपुरीसो, एसो ते अप्पणो गंधो ॥ ५८ ॥
जो परगिहस्स लच्छि, कहिंपि पासित्तु कहइऽहं धणिओ। सो किर सयं दरिद्दो, भासंतो कहं न लज्जेइ ? ॥५९॥

---

काकशुनकैर्भक्ष्ये, कृमिकुलभक्ष्ये च व्याधिभक्ष्ये च । देहे मृत्युभक्ष्ये, स्मशानभक्ष्ये को रागः ? ॥ ५३ ॥
दन्तमलकर्णगूथक-सिङ्घानकलालापूरिते दुष्टे । नित्यमशाश्वते, क्षणमपि मा रमध्वं देहे ॥ ५४ ॥
प्रेक्षसे मुखं सनिलयं[निःशेपलयसहितं], सविशेपं राजितेन अधरेण। सकटाक्षं सविकारं, तरलाक्षी यौवनारम्भे ॥ ५५ ॥
प्रेक्षसे बाह्यमर्थं, न प्रेक्षसे अन्तरङ्गमुद्दिष्टं । कामेन मोहितस्त्वं, हा हा !! भविष्यसि कथं मूढ ! ॥ ५६ ॥
पाटलचम्पकमल्लिका-अगुरुकचन्दनतुरुष्कव्यामिश्रं । गन्धं समवतरन्, मुग्धो मन्यते सुगन्धोऽहम् ॥ ५७ ॥
अक्षिमलः कर्णमलः, खेलः सिङ्घानकश्च पूयश्च। अशुचिमूत्रपुरीपो, एप ते आत्मनो गन्धः ॥ ५८ ॥
यः परगृहस्य लक्ष्मीं, कुत्रापि दृष्ट्वा कथयत्यहं धनिकः। स किल स्वयं दरिद्रो, भापमाणः कथं न लज्जते ? ॥ ५९ ॥

जो परधणेण सहणो, जो परगंधेण मण्णइ सुगंधोऽहं । तं पुरिसं गयलज्जं, हसंति वेरग्गअमियधरा ॥ ६० ॥
जस्स य जस्स य जोगो, तस्स तस्स य हवेज्ज हु विओगो । इय नाऊण विरत्ता !, विसयविसं दूरओ मुयह ६१

अंचेइ कालो य तरंति राइओ, नयावि भोगा पुरिसाण निच्चा ।
उविच्च भोगा पुरिसं चयंति, दुमं जहा खीणफलं व पक्खी ॥ ६२ ॥

पुत्ता चयंति मित्ता, चयंति भज्जावि णं सुयं चयइ । इक्को न चयइ धम्मो, रम्मो सवन्नु उवइट्ठो ॥ ६३ ॥
आहारासणनिद्दा-जयं च काऊण जिणवरमएणं । झाइज्जइ नियअप्पा, उवइट्ठं जिणवरिंदेणं ॥ ६४ ॥

---

यः परधनेन सधनो, यः परगन्धेन मन्यते सुगन्धोऽहं । तं पुरुषं गतलज्जं, हसन्ति वैराग्यामृतधराः ॥ ६० ॥
यस्य च यस्य च योग-स्तस्य तस्य च भवेत्खलु वियोगः । इति ज्ञात्वा विरक्ताः !, विषयविषं दूरतो मुञ्चत ॥ ६१ ॥

अच्च( गच्छ )ति कालश्च तर(या)न्ति रात्र्यो, न चापि भोगाः पुरुषाणां नित्याः ।
उपेत्य ( प्राप्य ) भोगा पुरुषं त्यजन्ति, द्रुमं यथा क्षीणफलमिव पक्षी ॥ ६२ ॥

पुत्रास्त्यजन्ति मित्राणि, त्यजन्ति भार्याऽपि सुतं त्यजति । एको न त्यजति धर्मो, रम्यः सर्वज्ञोपदिष्टः ॥ ६३ ॥
आहारासननिद्रा-जयं च कृत्वा जिनवरमतेन । ध्यायते निज आत्मा, उपदिष्टं जिनवरेन्द्रेण ॥ ६४ ॥

किंचि दुम्मीलिअक्खणो ॥ ६५ ॥
अणरंतं निहाणाय, दढं पल्लंकमासणं । नासग्गदत्तसन्नित्तो, किंचि दुम्मीलिअक्खणो ॥ ६६ ॥ [युग्मम्]
मंकप्पगाउराओ, दूरुस्सारियमाणसो । संसारच्छेयणुस्साहो, संवेगं झाउमरिहइ ॥ ६७ ॥
संवेगअमलनीरेण, कलिमलपंकेण पंकियं जीवं । पक्खालह थिरचित्तो, फलिहुव्व जहुज्जलो होइ ॥ ६८ ॥
मंडारीविसघोरा, पिसुणा छिद्दं च ते गवेसंति । मा रज्जसु कस्सुवरिं, सिणेहबंधं च मा रयसु ॥ ६९ ॥
गुरुकम्मो सो जीवो, जो वेरग्गाओ नट्ठओ फिरइ । अहवा सच्चवहाणो, सुणहो किं करइ कप्पूरं ? ॥ ७० ॥
आऊसयं खु अद्धं, निद्दामोहेण ते गयं मित्त ! । अद्धं जं उव्वरियं, तं पि तिहायं च संजायं ॥ ७० ॥

---

किञ्चिदुन्मीलिताक्षणः ॥ ६५ ॥
अनवरतं निपापाय, दृढं पर्यङ्कमासनं । नासाग्रदत्तसन्नेत्रः, किञ्चिदुन्मीलिताक्षणः ॥ ६६ ॥
सङ्कल्पपाशुरावो, दूरोत्सारितमानसः । संसारच्छेदनोत्साहः, संवेगं ध्यातुमर्हति ॥ ६७ ॥
संवेगामलनीरेण, कलिमलपङ्केन पङ्कितं जीवं । प्रक्षालयत स्थिरचित्तः, स्फटिक इव यथोज्ज्वलो भवति ॥ ६८ ॥
भण्डारीविषघोराः, पिशुनाश्छिद्रं च ते (तव) गवेषयन्ति । मा रज्यस्व कस्योपरि, स्नेहबन्धं च मा रचयत ॥ ६८ ॥
गुरुकर्मा स जीवो, यो वैराग्यान्नष्टको भ्रमति । अथवा सत्योपधानः, शुनकः किं करोति कर्पूरम् ? ॥ ६९ ॥
आयुःशतं खलु अर्धं, निद्रामोहेन ते गतं मित्र ! । अर्धं यदुद्धरितं (अवशिष्टं), तदपि त्रिधाकं च सञ्जातम् ॥ ७० ॥

बालत्तणम्मि किंचिवि, किंचिवि तरुणत्तणम्मि थेरत्ते । एमेव गयं जम्मं, सुण्णारण्णे तडागुव्व ॥ ७१ ॥
सदोसमवि दित्तेणं, सुवन्नं वण्हिणा जहा । तवग्गिणा तप्पमाणो, तहा जीवो विसुज्झइ ॥ ७२ ॥
ते सूरा ते पंडिया, [संविग्गा] जिण्ह ण माणमरट्ट। जे महिलाण न वसि, पडिया ते [न]फिरिसह जेम घरट्ट ७३
करवत्तकूडसामलि-वेयरणीकोलमुग्गरप्पमुहं । नरयस्स इमं दुक्खं, अबंधवो सहसि एगागी ॥ ७४ ॥

आहारमिच्छे मियमेसणिज्जं, साहायमिच्छे निउणट्ठबुद्धिं ।
निकेयमिच्छेज्ज विवेगजुग्गं, समाहिकामो समणो विरत्तो ॥ ७५ ॥

---

बालत्वे किञ्चिदपि. किञ्चिदपि तरुणत्वे स्थविरत्वे । एवमेव गतं जन्म, शून्यारण्ये तटाक इव ॥ ७१ ॥
सदोषमपि दीप्तेन, सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमान-स्तथा जीवो विशुध्यति ॥ ७२ ॥
ते शूरास्ते पण्डिताः, [संविग्नाः] येषा न मानमरट्ट(उत्कर्षः) । ये महिलाना न वशे, पतितास्ते [न]भ्रमिष्यन्ति यथा घरट्ट ७३
करपत्रकूटशाल्मलि-वैतरणीकोलमुद्गरप्रमुखं । नरकस्येदं दुःखं, अबान्धवो सहसे एकाकी ॥ ७४ ॥

आहारमिच्छेत् मितमेषणीयं, सहायमिच्छेत् निपुणार्थबुद्धिम् ।
निकेतमिच्छेद् विवेकयोग्यं, समाधिकामः श्रमणो विरक्तः ॥ ७५ ॥

न या लद्दिज्जा निउणं सहायं, गुणाहियं वा गुणओ समं वा।
इक्को वि पावाइं विवज्जयंतो, विहरिज्ज कामेसु असज्जमाणो ॥ ७६ ॥ [ दश० चूलिका २ गाथा १० ]
जहा य अंडप्पभवा बलागा, अंडं बलागप्पभवं जहा य। एमेव मोहाययणं खु तण्हा, मोहं च तण्हाययणं वयंति ७७
रागो वि दोसो वि य कम्म बीयं, कम्मं च मोहप्पभवं वयंति। कम्मं च जाइमरणस्स मूलं, दुक्खं च जाइमरणं वयंति ७८
दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा।
तण्हा हया जस्स न होइ लोहो, लोहो हओ जस्स न किंचणाइ ॥ ७९ ॥

---

न वा लभेत् निपुणं सहायं, गुणाधिकं वा गुणतः समं वा ।
एकोऽपि पापानि विवर्जयन्, विहरेत् कामेष्वसज्यमानः ॥ ७६ ॥
यथा च अण्डप्रभवा बलाका, अण्डं बलाकाप्रभवं यथा च। एवमेव मोहायतनं खलु तृष्णा, मोहं च तृष्णायतनं वदन्ति ॥ ७७ ॥
रागोऽपि द्वेषोऽपि च कर्मबीजं, कर्म च मोहप्रभवं वदन्ति। कर्म च जातिमरणस्य मूलं, दुःखं च जातिमरणं वदन्ति ॥ ७८ ॥
दुःखं हतं यस्य न भवति मोहः, मोहो हतो यस्य न भवति तृष्णा।
तृष्णा हता यस्य न भवति लोभः, लोभो हतो यस्य न किञ्चनापि ॥ ७९ ॥

रसा पगामं न निसेवियव्वा, पायं रसा दित्तिकरा नराणं ।
दित्तं च कामा समभिद्दवंति, दुमं जहा साउफलं व पक्खी ॥ ८० ॥
जहा दवग्गी पउरिंधणे वणे, समारुओ नोवसमं उवेइ ।
पंचिंदियग्गीवि पगामभोइणो, न बंभयारिस्स हिआय कस्सइ ॥ ८१ ॥
विवित्तसेज्जासणजंतियाणं, ओमासणाणं दमिइंदिआणं ।
न रागसत्तू धरिसेइ चित्तं, पराइओ वाहिरिवोसहेहिं ॥ ८२ ॥
जहा बिरालवसहिस्स मूले, न मूसगाणं वसही पसत्था ।

---

रसाः प्रकामं न निषेवितव्याः, प्रायो रसा दीप्तिकरा नराणाम् ।
दीप्तं च कामाः समभिद्रवन्ति, द्रुमं यथा स्वादुफलमिव पक्षी ॥ ८० ॥
यथा दवाग्निः प्रचुरेन्धने वने, समारुतो नोपशममुपैति ।
पञ्चेन्द्रियाग्निरपि प्रकामभोजिनो, न ब्रह्मचारिणो हिताय कस्यापि ॥ ८१ ॥
विविक्तशय्यासनयन्त्रितानां, अवमाशनानां [ अल्पाहारिणां ] दमितेन्द्रियाणाम् ।
न रागशत्रुर्द्धर्षयति चित्तं, पराजितो व्याधिरिवौषधैः ॥ ८२ ॥
यथा विडालवसतेर्मूले, न मूषकाणां वसतिः प्रशस्ता ।

एमेव इत्थीनिलयस्स मूले, न बंभयारिस्स खमो निवासो ॥ ८३ ॥
अदंसणमपत्थण-मचिंतणमकित्तणं तुरीयं । नारीजणस्स सुहयं, हवेइ वेरग्गधारीणं ॥ ८४ ॥
अदंसणमपत्थण-मचिंतणमकित्तणं तुरीयं । नारीजणस्स सुहयं, हवेइ वेरग्गधारीणं ॥८५॥
विभूसियाहिं देवीहिं, विरत्तो खोहिउं न सक्को य। तहवि हु एगंत हिय-म्मि य नाउं विवित्तं मा सहय ॥८५॥

रूवेसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं।
रागाउरो सो जह वा पयंगो, आलोयलोलो समुवेइ मच्चुं ॥ ८६ ॥
सद्देसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं।
रागाउरो सो हरिणुव्व गिद्धो, सद्दे अतित्तो समुवेइ मच्चुं ॥ ८७ ॥

---

एवमेव स्त्रीनिलयस्य मूले, न ब्रह्मचारिणः क्षमो [ योग्यो ] निवासः ॥ ८३ ॥
अदर्शनमप्रार्थन-मचिन्तन-मकीर्तनं चतुर्यं (चतुर्थं)। नारीजनस्य सुखदं ( शुभदं ), भवति वैराग्यधारिणाम् ॥ ८४ ॥
विभूषिताभिर्देवीभि-र्विरक्तः क्षोभितुं न शक्यश्च। तथापि खलु एकान्त हिते च ज्ञात्वा विविक्तं मा सह(श्रय)त ॥ ८५ ॥

रूपेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुरः स यथा वा पतङ्गः, आलोकलोलः समुपैति मृत्युम् ॥ ८६ ॥
शब्देषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुरः स हरिण इव गृद्धः, शब्देऽतृप्तः समुपैति मृत्युम् ॥ ८७ ॥

गंधेसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं ।
रागाउरो ओसहिगंधगिद्धो, सप्पो बिलाओ विव निक्खमंतो॥ ८८ ॥
रसेसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं ।
रागाउरो विडिसविभिन्नकाओ, मच्छो जहा आमिसभोगगिद्धो ॥ ८९ ॥
फासेसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं ।
रागाउरे सीयजलावसण्णे, गाहग्गहीए महिसे व रण्णे ॥ ९० ॥
एसु विरत्तो मणुओ विसोगो,एतेण दुक्खोहपरंपरेण। न लिप्पइ भवमज्झे वसंतो,जले जहा उप्पलिणीपलासं ९१

गन्धेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुर ओषधिगन्धगृद्धः, सर्पो बिलादिव निष्क्रमन् ॥ ८८ ॥
रसेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुरो विडिशविभिन्नकायो, मत्स्यो यथा आमिषभोगगृद्धः । ॥ ८९ ॥
स्पर्शेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुरः शीतजलावपन्नो, ग्राह(ग्राहेण–मकरेण)गृहीतो महिष इवारण्ये ॥ ९० ॥
एए विरक्तो मनुजो विशोक, एतेन दुःखौघपरम्परेण। न लिप्यते भवमध्ये वसन्, जले यथा उत्पलिनीपलाशम् ॥ ९१ ॥

अंकुसकसरज्जुबंधण-छेयणपमुहाइं उवद्दवसयाइं । तिरिया य परवसेणं, सहंति हा !! कम्मउदएणं ॥ ९२ ॥
मा वयह कडुयवयणं, परमम्मं मा कहेह कइयावि । परगुणधणं च पासिय, कयावि मा मच्छरं वहह ॥ ९३ ॥
मा रूसह मा तुसह, कस्स वि उवरि वेरग्गसंलीणो । अप्पारंजण निर[तो]द्धो (?), समाहिहरयम्मि मज्जेह ॥ ९४ ॥
बाहिरमब्भितरियं, परिग्गहं परिहरह भो भव्वा ! । वेरग्गदिणयरेणं, परिग्गहतमसंचयं हणह ॥ ९५ ॥
वेरग्गमहारयणा-यरम्मि पत्ते वि जेऽहियपमाया । ते कालेणं घत्था, पडिया भीमम्मि भवकूवे ॥ ९६ ॥
आया अणुहवसिद्धो, अमुत्ति कत्ता सदेहपरिमाणो । पुरिसायारो णिच्चो, नाओ संवेगकुसलेहिं ॥ ९७ ॥

---

अङ्कुशकशारज्जुबन्धन-छेदनप्रमुखानि उपद्रवशतानि । तिर्यञ्चश्च परवशेन, सहन्ते हा !! कर्मउदयेन ॥ ९२ ॥
मा वदत कटुकवचनं, परमर्म मा कथयत कदाचिदपि । परगुणधनं च दृष्ट्वा, कदाऽपि मा मत्सरं वहत ॥ ९३ ॥
मा रुष्यत मा तुष्यत, कस्यापि उपरि वैराग्यसंलीनः । आत्मारञ्जननिर[तः]र्धः (?), समाधिहृदे मज्जत ॥ ९४ ॥
बाह्यमाभ्यन्तरिकं, परिग्रहं परिहरत भो भव्याः ! । वैराग्यदिनकरेण, परिग्रहतमस्सञ्चयं हत ॥ ९५ ॥
वैराग्यमहारत्ना-करे प्राप्तेऽपि येऽधिकप्रमादाः । ते कालेन ग्रस्ताः, पतिता भीमे भवकूपे ॥ ९६ ॥
आत्माऽनुभवसिद्धो-ऽमूर्तिः कर्ता [कर्मणां] स्वदेहपरिमाणः । पुरुषाकारो नित्यो, ज्ञातः संवेगकुशलैः ॥ ९७ ॥

चउनिच्छयपाणजुओ, लोयस्सऽग्गम्मि संठिओ विमलो। पुनरागमणविहीणो, सिद्धो उत्तो विरत्तेहिं ॥ ९८ ॥
सवे वि जिणवरिंदा, सवे गणहारिणो य आयरिया। जे पुण चरिमसरीरा, ते सवे संवेगपसायओ सिद्धा ॥ ९९ ॥
कलिकेलिविप्पमुत्ता, आगामतारासु जुत्तिसंरत्ता। संवेगदत्तचित्ता, सासयवासं समणुपत्ता ॥ १०० ॥
मत्ता वि य जे मंदा, तेसिं कए णं परिस्समो एसो। विवुहाहमेण विहिओ, मए जिणाणारएणं च ॥ १०१ ॥
इय कइवयगाहाहिं, अमुणियआगमवियारलेसेणं। रइयं पगरणमेयं, 'लच्छीलाहेण' वरमुणिणा ॥ १०२ ॥

चतुर्निश्चयप्राणयुतो, लोकस्याग्रे संस्थितो विमलो। पुनरागमनविहीनः, सिद्ध उक्तो विरक्तैः ॥ ९८ ॥
सर्वेऽपि जिनवरेन्द्राः, सर्वे गणधारिणश्च आचार्याः। ये पुनश्चरमशरीरा–स्ते सर्वे संवेगप्रसादतः सिद्धाः ॥ ९९ ॥
कलिकेलिनिर्मुक्ता, आग्रामतारासु युक्तिसंरक्ताः। संवेगदत्तचित्ताः, शाश्वतवासं समनुप्राप्ताः ॥ १०० ॥
मत्तोऽपि च ये मन्दाः, तेषां कृते परिश्रम एषः। विबुधाधमेन विहितो, मया जिनाज्ञारतेन च ॥ १०१ ॥
इति कतिपयगाथाभि–रज्ञाताऽऽगमविचारलेशेन। रचितं प्रकरणमेतत्, 'लक्ष्मीलाभेन' वरमुनिना ॥ १०२ ॥

१ ज्ञानदर्शनचारित्रवीर्यात्मकानन्तचतुष्टयरूपैर्भावप्राणैर्युतः।

इति वैराग्यरसायनप्रकरणं समाप्तम्।

श्रेष्ठि देवचन्द लालभाई-जैन-पुस्तकोद्धार-ग्रन्थाङ्के—

श्रीमज्जिनपदाम्बुजभ्रमरोपासक-श्रेष्ठिवरधनदेवात्मज-कविवर-श्रीपद्मानन्दप्रणीतं वैराग्यशतमित्यपराभिधानं

# पद्मानन्दशतम्



त्रैलोक्यं युगपत्कराम्बुजलुठन्मुक्तावदालोकते, जन्तूनां निजया गिरा परिणमद्यः सूक्ष्ममाभाषते ।
स श्रीमान् भगवान् विचित्रविधिभिर्देवासुरैरर्चितो, वीतत्रासविलासहासरभसः पायाज्जिनानां पतिः ॥ १ ॥ (शार्दूल०)

यैः क्षुण्णाः प्रसरद्विवेकपविना कोपादिभूमिभृतो, योगाभ्यासपरश्वधेन कपितो यैर्मोहधात्रीरुहः ।
यद्वः संयमसिद्धमन्त्रविधिना यैः प्रौढकामज्वर-स्तान्मोक्षैकसुखानुषङ्गरसिकान्वन्दामहे योगिनः ॥ २ ॥ (शार्दूल०)

यैस्त्यक्ता किल शाकिनीमदसमप्रेमाञ्चिता प्रेयसी, लक्ष्मीः प्राणसमाऽपि पन्नगवधूवत्प्रोज्झिता दूरतः ।
मुक्तं चित्रगवाक्षराजिरुचिरं वल्मीकवन्मन्दिरं, निस्सङ्गत्वविराजिताः क्षितितले नन्दन्तु ते साधवः ॥ ३ ॥ (शार्दूल०)

यः परवादे मूकः, परनारीवक्त्रवीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे, स जयति लोके महापुरुषः ॥ ४ ॥ (आर्या)

१ चूर्णीकृताः । २ वज्रेण । ३ परशुना । ४ लून । ५ (वृक्षः) ।

आक्रोशेन न दूयते न च चटुप्रोक्त्या समानन्द्यते, दुर्गन्धेन न बाध्यते न च सदामोदेन सम्प्रीयते ।
स्त्रीरूपेण न रज्यते न च मृतश्वानेन विद्विष्यते, माध्यस्थ्येन विराजितो विजयते कोऽप्येष योगीश्वरः ॥ ५ ॥ (शा०)
मित्रे नन्दति नैव नैव पिशुने वैरातुरो जायते, भोगे लुभ्यति नैव नैव तपसि क्लेशं समालम्बते ।
रत्ने रज्यति नैव नैव दृषदि प्रद्वेषमापद्यते, येषां शुद्धहृदां सदैव हृदयं ते योगिनो योगिनः ॥ ६ ॥ (शार्दूल०)
सौन्दर्यैकनिधेः कलाकुलविधेर्लावण्यपाथोनिधेः, पीनोत्तुङ्गपयोधरालसगतेः पातालकन्याकृतेः[1] ।
कान्ताया नवयौवनाश्रिततनोर्यैरुज्झितः सङ्गमः, सम्यङ्मानसगोचरे चरति? किं तेषां हताशः स्मरः ॥७॥ (शार्दूल०)
शृङ्गारामृतसेकशाड्वलरुचिर्वक्रोक्तिपत्रान्विता, प्रोद्गच्छत्सुमनोऽभिपङ्गसुभगा स्त्रीणां कथावल्लरी ।
यैर्ब्रह्मव्रतपावकेन परितो भस्मावशेषीकृता, किं तेषां विषमायुधः प्रकुरुते? रोषप्रकर्षेऽपि रे! ॥ ८ ॥ (शार्दूल०)
आताम्रायेतलोचनाभिरनिशं सन्तर्ज्य सन्तर्ज्य च, क्षिप्तस्तीक्ष्णकटाक्षमार्गणगणो मत्ताङ्गनाभिर्भृशम् ।
तेषां किं नु विधास्यति? प्रशमितप्रद्युम्नलीलात्मनां, येषां शुद्धविवेकवज्रफलकं पार्श्वे परिभ्राम्यति ॥ ९ ॥ (शार्दूल०)
अग्रे सा गजगामिनी प्रियतमा पृष्ठेऽपि सा दृश्यते, धात्र्यां सा गगनेऽपि सा किमपरं सर्वत्र सा सर्वदा ।
आसीद्यावदनङ्गसङ्गतिरसस्तावत्तवेयं स्थितिः, सम्प्रत्यास्यपुरस्सरामपि न तां द्रष्टाऽसि कोऽयं लयः? ॥ १० ॥ (शार्दूल०)
योगे पीनपयोधराश्रिततनोर्विच्छेदने बिभ्यतां, मानस्यावसरे चटूक्तिविधुरं दीनं मुखं बिभ्रताम् ।

1 नागकन्या—नागकुमारदेवाङ्गनातुल्यायाः । 2 अतिरक्तविस्तीर्णः । 3 प्रभो । 4 कामः । 5 चेटक (?) [ चेट —डाल इति लोके ] ।

विश्लेषे स्मरवह्निनाऽनुसमयं दन्दह्यमानात्मनां, भ्रातः! सर्वदशासु दुःखगहनं धिक्कामिनां जीवितम् ॥११॥ (शार्दूल०)
मध्येऽस्याः कृशतां कुरङ्गकदृशो भ्रूनेत्रयोर्वक्रतां, कौटिल्यं चिकुरेषु रागमधरे मान्द्यं गतिप्रक्रमे ।
काठिन्यं कुचमण्डले तरलतामक्ष्णोर्निरीक्ष्य स्फुटं, वैराग्यं न भजन्ति मन्दमतयः कामातुरा ही!! नराः ॥१२॥ (शार्दू०)
पाण्डुत्वं गमितोऽलकोत्करः प्रतिहतां तारुण्यपुण्यश्रियं, चक्षुः क्षीणबलं कृतं श्रवणयोर्बाधिर्यमुत्पादितम् ।
स्थानभ्रंशमयापिताश्च जरया दन्तास्थिमांसत्वचः, पश्यन्तोऽपि जडा हहा!! हृदि सदा ध्यायन्ति तां प्रेयसीम् ॥१३॥ (शा०)
अन्यागाद्यविषयकचिदपि भ्रष्टं समस्तं रदैः–स्तापक्लान्ततमालपत्रवदभूदङ्गं वलीभङ्गुरम् ।
केशेषु क्षणचन्द्रचन्द्रधवलिमा व्यक्तं श्रितो यद्यपि, स्वैरं धावति मे तथापि हृदयं भोगेषु मुग्धं हहा!! ॥१४॥ (शार्दूल०)
उद्गृणन्ति प्रपञ्चेन, पोषितो गद्गदां गिरम् । तामामनन्ति प्रेमोर्मिं, कामग्रहिलचेतसः ॥ १५ ॥ (अनुष्टुब्वृत्तम्)
पायपुष्टरसक्षयाय नितरां नाहारलौल्यं जितं, सिद्धान्तार्थमहौषधैर्निरुपमश्चूर्णो न जीर्णो हृदि ।
पीतं ज्ञानघृतं न विधिना तावत्स्मरोत्थो ज्वरः, शान्तिं याति न तात्त्विकीं हृदय! हे शेषैरलं भेषजैः ॥१६॥ (शा०)
शृङ्गारद्रुमनीरदे प्रसृमरक्रीडारसस्रोतसि, प्रद्युम्नप्रियबान्धवे चतुरवाङ्मुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपार्वणविधौ सौभाग्यलक्ष्मीनिधौ, धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥ १७ ॥ (शा०)
सम्यक्परिहृता येन, कामिनी गजगामिनी । किं करिष्यति? रुष्टोऽपि, तस्य वीरवरः स्मरः ॥ १८ ॥ (अनुष्टुब्वृत्तम्)

१ केशेषु । २ ग्रासान् । ३ केशात् । ४ (पूर्णिमाचन्द्रपक्ष) । ५ असावियन्तः पुंसि वर्तते । ६ कामः । ७ ह्री ।

लज्जेयं प्रलयं प्रयाति झटिति ब्रह्मव्रतं नश्यति, ज्ञानं सङ्कुचति स्मरज्वरवशात्पश्यामि यावत्प्रियाम् ।
यावत्तु स्मृतिमेति नारकगतेः पाकक्रमो भीषण—स्तावत्तत्त्वनिरीक्षणात्प्रियतमाऽप्येषा विषौघायते ॥ १९ ॥ (शार्दूल०)
कारुण्येन हता वधव्यसनिता सत्येन दुर्वाच्यता, सन्तोषेण परार्थचौर्यपटुता शीलेन रागान्धता ।
नैर्ग्रन्थ्येन परिग्रहग्रहिलता यैर्यौवनेऽपि स्फुटं, पृथ्वीयं सकलाऽपि तैः सुकृतिभिर्मन्ये पवित्रीकृता ॥ २० ॥ (शार्दूल०)
यत्राशोकोऽपि विचित्रमञ्जरिभरव्याजेन रोमाञ्चितो, दोलारूढविलासिनीविलसितं चैत्रे विलोक्याद्भुतम् ।
सिद्धान्तोपनिषन्निषण्णमनसां[1] येषां मनस्सर्वथा, तस्मिन्मन्मथबाधया न मथितं धन्यास्त एव ध्रुवम् ॥ २१ ॥ (शार्दूल०)
स्वाध्यायोत्तमगीतिसङ्गतिजुषः सन्तोषपुष्पाश्रिताः, सम्यग्ज्ञानविलासमण्डपगताः सद्ध्यानशय्यां श्रिताः ।
तत्त्वार्थप्रतिबोधदीपकलिकाक्षान्त्यङ्गनासङ्गिनो, निर्वाणैकसुखाभिलाषिमनसो धन्या नयन्ते निशाम् ॥ २२ ॥ (शार्दूल०)
किं ? लोलाक्षि ! कटाक्षलम्पटतया किं ? स्तम्भजृम्भादिभिः, किं ? प्रत्यङ्गनिदर्शनोत्सुकतया किं ? प्रोल्लसद्भ्रूद्रुमिः ।
आत्मानं प्रतिबाधसे त्वमधुना व्यर्थं मदर्थं यतः, शुद्धध्यानमहारसायनरसे लीनं मदीयं मनः ॥ २३ ॥ (शार्दूल०)
सज्ज्ञानदर्शनशाली, दर्शनशाखश्च येन वृत्ततरुः[2] । श्रद्धाजलेन सिक्तो, मुक्तिफलं तस्य स ददाति ॥ २४ ॥ (आर्या)
क्रोधाद्युग्रचतुष्कषायचरणो व्यामोहहस्तस्सखे !, रागद्वेषनिशातदीर्घदशनो दुर्वारमारोद्धुरः ।
सज्ज्ञानाङ्कुशकौशलेन स महामिथ्यात्वदुष्टद्विपो, नीतो येन वशं वशीकृतमिदं तेनैव विश्वत्रयम् ॥ २५ ॥ (शार्दूल०)

---

१ (सिद्धान्तस्योपनिषदि-रहस्ये निषण्णं-निविष्टं मनो येषां ते तथा, तेषां) विदुषाम् । २ ("वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले" इत्यमरः) ।

दृश्यन्ते बहवः कलासु कुशलास्ते च स्फुरत्कीर्त्तये, सर्वस्वं वितरन्ति ये तृणमिव क्षुद्रैरपि प्रार्थिताः ।
धीरास्तेऽपि च ये त्यजन्ति झटिति प्राणान्कृते स्वामिनो, द्वित्रास्ते तु नरा मनस्समरसं येषां सुहृद्वैरिणो ॥२६॥ (शा०)
हृदयं सदयं यस्य, भाषितं सत्यभूषितम् । कायः परहितोपायः, कलिः कुर्वीत तस्य किम्? ॥ २७ ॥ (अनुष्टुब्वृत्तम्)
नास्त्यसञ्चापितं यस्य, नास्ति भङ्गो रणाङ्गणात् । नास्तीति याचके नास्ति, तेन रत्नवती क्षितिः ॥ २८ ॥ (अनुष्टुब्वृत्तम्)
आनन्दाय न कस्य मन्मथकथा? कस्य प्रिया न प्रिया?, लक्ष्मीः कस्य न वल्लभा? मनसि नो कस्याङ्गजः क्रीडति? ।
ताम्बूलं न सुखाय कस्य? न मतं कस्यान्नशीतोदकम्, सर्वाशाद्रुमकर्त्तनैकपरशुर्मृत्युर्न चेत्स्याज्जनाः! ॥२९॥ (शार्दूल०)
भार्येयं मधुराकृतिर्मम मम प्रीत्यन्वितोऽयं सुतः, स्वर्णस्यैष महानिधिर्मम ममासौ बन्धुरो बान्धवः ।
रम्यं हर्म्यमिदं ममेत्थमनया व्यामोहितो मायया, मृत्युं पश्यति नैव दैवहतकः क्रुद्धं पुरश्चारिणम् ॥ ३० ॥ (शार्दूल०)
कष्टोपार्जितमत्र वित्तमखिलं द्यूते मया योजितं, विद्या कष्टतरं गुरोरधिगता व्यापारिता कुस्तुतौ ।
पारम्पर्यसमागतश्च विनयो वामेक्षणायां कृतः, सत्पात्रे किमहं करोमि? विवशः कालेऽद्य नेदीयसि ॥ ३१ ॥ , (शा०)
आत्मा यद्विनियोजितो न विनये नोग्रं तपः प्रापितो, न क्षान्त्या समलङ्कृतः प्रतिकलं सत्येन न प्रीणितः ।
तत्त्वं निन्दसि नैव कर्महतकं प्रासे कृतान्तक्षणे, दैवायैव ददासि जीव! नितरां शापं विमूढोऽसि रे! ॥ ३२ ॥ (शा०)
बालो यौवनसम्पदापरिगतः क्षिप्रं क्षितौ लक्ष्यते, वृद्धत्वेन युवा जरापरिणतो व्यक्तं समालोक्यते ।
सोऽपि क्वापि गतः कृतान्तवशतो न ज्ञायते सर्वथा, पश्यैतद्यदि कौतुकं किमपरैस्तैरिन्द्रजालैः सखे! ॥ ३३ ॥ (शा०)

द्वारं दन्तिमदप्रवाहनिवहैर्येषामभूत्पङ्किलं, ग्रासाभाववशान्न सञ्चरति यद्‌द्वक्षोऽपि तेषां पुनः ।
येऽभूवन्विमुखाः स्वकुक्षिभरणे तेषामकस्मादहो!!, यच्च श्रीरिह दृश्यतेऽतिविपुला तत्कर्मलीलायितम् ॥ ३४ ॥ (शा०)
नापत्यानि न वित्तानि, न सौधानि भवन्त्यहो!! । मृत्युना नीयमानस्य, पुण्यपापे परं पुरः ॥ ३५ ॥ (अनुष्टुब्वृत्तम्)
भूतेऽहङ्कृतिनिग्रहं मृदुतया पश्चात्करिष्याम्यहं, प्रोद्यन्मारविकारकन्दकदनं पञ्चेन्द्रियाणां जयात् ।
व्यामोहप्रसरावरोधनविधिं सद्ध्यानतो लीलया, नो जानाति हरिष्यतीह हतकः कालोऽन्तराले किल ॥ ३६ ॥ (शा०)
बद्धा येन दशाननेन नितरां खट्वैकदेशे जरा, द्रोणाद्रिश्च समुद्धृतो हनुमता येन स्वदोर्लीलया ।
श्रीरामेण च येन राक्षसपतिस्त्रैलोक्यवीरो हतः, सर्वे तेऽपि गताः क्षयं विधिवशात्काऽन्येषु तद्धोः! कथा? ॥३७॥ (शा०)
सर्वभक्षी कृतान्तोऽयं, सत्यं लोके निगद्यते । रामदेवादयो धीराः, सर्वे क्वाप्यन्यथा गताः ॥ ३८ ॥ (अनुष्टुब्वृत्तम्)
मिथ्यात्वानुचरैर्विचित्रगतिभिः सञ्चारितस्योद्भटै-रत्युग्रभ्रममुद्गराहतिवशात्सम्मूर्च्छितस्यानिशम् ।
संसारेऽत्र नियन्त्रितस्य निगडैर्मायामयैश्चौरवत्, मुक्तिः स्यान्मम सत्वरं कथमतः सद्वृत्तवित्तं विना ॥ ३९ ॥ (शार्दूल०)
दुष्प्रापं मकराकरे करतलाद्रत्नं निमग्नं यथा, संसारेऽत्र तथा नरत्वमथ तत्प्राप्तं मया निर्मलम् ।
भ्रातः! पश्य विमूढतां मम हहा!! नीतं यदेतन्मुधा, कामक्रोधकुबोधमत्सरकुधीमायामहामोहतः ॥ ४० ॥ (शार्दूल०)
येनेह क्षणभङ्गुरेण वपुषा क्लिन्नेन सर्वात्मना, सद्व्यापारवियोजितेन परमं निर्वाणमप्याप्यते ।



१ "द्वारे" इत्यध्याहार्यमत्र कर्म । २ (नाशनम्) । ३ (मात्सरहितः) ।

प्रीतिस्तेन हहा!! सखे! प्रियतमारक्रेन्दुरागोद्भवा, क्रीता स्वल्पसुखाय मूढमनसा कोट्या मया काकिणी ॥४१॥ (शा०)

क्रीडाकारि परोपहासरचनं तुष्टै परव्यंसनं, कान्ता काञ्चनसुन्दराङ्गलतिका कान्तैव पृथ्वीतले।
भव्यो द्रव्यसमर्जने किल महारम्भोद्यमः किन्तु रे!, मेदच्छेदनताडनादिविधिना रौद्रो महारौरवः ॥ ४२ ॥ (शार्दूल०)

कन्दर्पप्रसरप्रशान्तिविधये शीलं न संशीलितं, लोभोन्मूलनहेतवे स्वविभवो दत्तो न पात्रे मुदा।
व्यामोहोन्मथनाय सद्गुरुगिरां तत्त्वं न चाङ्गीकृतं, दुष्प्रापो नृभवो मया हतधिया हा!! हारितो हारितः ॥४३॥ (शा०)

सौख्यं मित्रकलत्रपुत्रविभवभ्रंशादिभिर्भङ्गुरं, कासश्वासभगन्दरादिभिरिदं व्याप्तं वपुर्व्याधिभिः।
भ्रातस्तूर्णमुपैति सान्निधिमसौ कालः करालाननः, कष्टं किं करवाण्यहं तदपि यच्चित्तस्य पापे रतिः ॥ ४४ ॥ (शार्दूल०)

संसारे गहनेऽत्र चित्रगतिषु भ्रान्त्याऽनया सर्वथा, रे रे जीव! न सोऽस्ति कश्चन जगन्मध्ये प्रदेशो ध्रुवम्।
यो नाप्तस्तव भूरिजन्ममरणैस्तत्किं न तेऽद्यापि ही!!, निर्वेदो हृदि विद्यते? यदनिशं पापक्रियायां रतिः ॥४५॥ (शार्दू०)

नो स्कन्धेन समुन्नतेन धरसे चारित्रगव्या धुरं, पृष्ठेनोपचितेन नैव वहसे प्रोच्चैरहिंसाभरम्।
मिथ्यात्वान्न[3]चयं पदाहतिवशाद्धो! गाहसे त्वं यत–श्वेतस्तत्कृतशङ्क! साङ्कपूर्ववान्नित्यं परिभ्राम्यसि ॥ ४६ ॥ (शार्दूल०)

प्राप्ते सत्कुलजन्ममानवभवे निर्दोषरत्नोपमे, नीरोगादिसमस्तवस्तुनिचये पुण्येन लब्धे सति।
नोपात्तं किमपि प्रमादवशतस्तत्त्वं त्वया मुक्तये, रे! जीवात्र ततोऽतिदुःखविषमे संसारचक्रे भ्रमः ॥ ४७ ॥ (शार्दूल०)

---

१ (मनोहरा)। २ शीघ्रम्। ३ (मिथ्यात्वमेवान्न, तस्य चय –समूहस्तम्)। ४ (अङ्केन–पूर्वोद्युपलक्षितचिह्नेन सहितो पूर्व–षण्ढः)।

क्रोधो न्यक्कृतिभाजनं न विहितो नीतो न मानः क्षयं, माया नैव हता हताश! नितरां लोभो न सङ्क्षोभितः ।
रे! तीव्रोत्कटकूटचित्तवशग! स्वान्त! त्वया हारितं, हस्तार्थं फलमाशु मानवभवश्रीकल्पवृक्षोद्भवम् ॥ ४८ ॥ (शार्दूल०)
बाल्ये मोहमहान्धकारगहने मग्नेन मूढात्मना, तारुण्ये तरुणीसमाहृतहृदा भोगैकसङ्गेच्छुना ।
वृद्धत्वेऽपि जराऽभिभूतकरणग्रामेण निःशक्तिना, मानुष्यं किल दैवतः कथमपि प्राप्तं हतं हा!! मया ॥४९॥ (शा०)
यस्मै त्वं लघु लङ्घसे जलनिधिं दुष्टाटवीं गाहसे, मित्रं वञ्चयसे विलुम्पसि निजं वाक्यक्रमं मुञ्चसि ।
तद्वित्तं यदि दृश्यते स्थिरतया कस्यापि पृथ्वीतले, रे रे!! चञ्चलचित्त! वित्तहृतक! व्यावर्त्ततां मे तदा ॥५०॥ शार्दूल०
अज्ञानाद्रितटे क्वचित्क्वचिदपि प्रद्युम्नगर्त्तान्तरे, मायागुल्मतले क्वचित्क्वचिदहो!! निन्दानदीसङ्कटे ।
मोहव्याघ्रभयातुर हरिणवत्संसारघोराटवी-मध्ये धावति पश्य सत्वरतरं कष्टं मदीयं मनः ॥ ५१ ॥ (शार्दूल०)
सच्चारित्रपवित्रदारुरचितं शीलध्वजालङ्कृतं, गुर्वाज्ञागुणगुम्फनादृढतरं सद्बोधपोतं श्रितः ।
मोहग्राहभयङ्कर तर महासंसारवारानिधिं, यावन्न प्रतिभिद्यते स्तनतटाघातैः कुरङ्गीदृशाम् ॥ ५२ ॥ (शार्दूल०)
किं भस्मप्रतिलेपनेन? वपुषो धूमस्य पानेन? किं, वस्त्रत्यागजुगुप्सया किमनया? किं? वा त्रिदण्ड्याऽप्यहो!! ।
किं स्कन्धेन नतेन? कम्बलभराज्जापस्य किं? मालया, वामाक्षीमभिधावमानमनिशं चेतो न चेद्रक्षितम् ॥५३॥ (शा०)
रोद्धुं बालमृणालतन्तुभिरसौ मत्तेभमुज्जृम्भते, भेत्तुं वज्रमयं शिरीषकुसुमप्रान्तेन सन्नह्यति ।

१ (वि-विशेषेण आ-समन्ताद्वर्त्ततां-भवतु) ।

अपरित्यक्तकषायाणां वृथाभनुजत्वहारणा-त्पश्चात्तापादिः

माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते, नेतुं वाञ्छति यः सतां पथि खलान्सूक्तैस्सुधास्यन्दिभिः ॥ ५४ ॥ (शार्दू०)

मुक्त्वा दुर्मतिमेदिनीं गुरुगिरा संशील्य शीलाचलं, बद्ध्वा क्रोधपयोनिधिं कुटिलतालङ्कां क्षपित्वा क्षणात् ।
नीत्वा मोहदशाननं निधनतामाराध्य वीरव्रतं, श्रीमद्राम इव क्व मुक्तिवनितायुक्तो भविष्याम्यहम्? ॥ ५५ ॥ (शार्दूल०)

आहारैर्मधुरैर्मनोहरतरैर्हारैर्विहारैर्वरैः, केयूरैर्मणिरत्नचारुशिखरैर्दारैरुदारैश्च किम्? ।
प्राणान्पद्मदलाग्रवारितरलाञ्ज्ञात्वा जवाज्जीव! रे, दानं देहि विधेहि शीलतपसी निर्वेदमास्वादय ॥ ५६ ॥ (शार्दूल०)

ज्ञात्वा बुद्बुदभङ्गुरं धनमिदं दीपप्रकम्पं वपु-स्तारुण्यं तरलेक्षणाक्षितरलं विद्युच्चलं दोर्बलम् ।
रे रे जीव! गुरुप्रसादवशतः किञ्चिद्विधेहि द्रुतं, दानध्यानतपोविधानविषयं पुण्यं पवित्रोचितम् ॥ ५७ ॥ (शार्दूल०)

श्रीखण्डपादपेनेव, कृतं स्वं जन्म निष्फलम् । जिह्मगानां द्विजिह्वानां, सम्बन्धमनुरुन्धता ॥ ५८ ॥ (अनुष्टुब्वृत्तम्)

किं? तर्केण वितर्कितेन शतशो ज्ञातेन किं? छन्दसा, किं? पीतेन सुधारसेन बहुधा स्वाध्यायपाठेन किम्? ।
अभ्यस्तेन च लक्षणेन किमहो!! ध्यानं न चेत्सर्वथा, लोकालोकविलोकनैककुशलं ज्ञानं हृदि ब्रह्मणः ॥ ५९ ॥ (शा०)

मां बाल्यादपि निर्निमित्तनिबिडप्रोद्भूतसख्यश्रियं, दम्भारम्भ! विहाय सत्वरतरं दूरान्तरं गम्यताम् ।
पश्योन्मीलति मेऽधुना शुभवशाज्ज्ञानोष्णरश्मिप्रभा, प्रालेयोत्करवद्भवन्तमनया द्रक्ष्याम्यहं त्वां कथम्? ॥६०॥ (शा०)

कारुण्यान्न सुधारसोऽस्ति हृदयद्रोहान्न हालाहलं, वृत्तादस्ति न कल्पपादप इह क्रोधान्न दावानलः ।

---

१ (हिमसमूहवत्)

सन्तोषादपरोऽस्ति न प्रियसुहृल्लोभान्न चान्यो रिपु-र्युक्तायुक्तमिदं मया निगदितं यद्रोचते त(द्व्रज)त्त्यज ॥६१॥ (शा०)
औचित्यांशुकशालिनीं हृदय! हे शीलाङ्गरागोज्ज्वलां, श्रद्धाज्ञानविवेकमण्डनवतीं कारुण्यहाराङ्किताम् ।
सद्बोधाञ्जनरञ्जिनीं परिलसच्चारित्रपत्राङ्कुरां, निर्वाणं यदि वाञ्छसीह परमक्षान्तिप्रियां तद्व्रज ॥ ६२ ॥ (शार्दूल०)
यत्रार्त्तिर्न मतिभ्रमो न न रतिः ख्यातिर्न नैरोन्नतिः, न व्याधिर्न त्रिधिर्निधिर्न न वधो ध्यानं न नाप्येषणा ।
नो दास्यं न विलासवाससदनं हास्यं न लास्यं च नो, तत्सांसारिकपुण्यपापरहितं ध्येयं पदं धीधनाः! ॥६३॥ (शार्दूल०)
तावद्भानुकराः प्रकाशनपरा यक्षेश्वरोऽप्यर्थवान्, सम्पूर्णेन्दुमुखी प्रिया प्रियमयी माधुर्यहृद्या सुधा ।
मुक्तादामगुणावलीपरिचितश्चैत्र(श्च)स्य चित्रोत्सवो, यावन्नैव विशन्ति हन्त!! हृदये सिद्धान्तवाक्योत्कराः ॥६४॥ (शा०)
क्षणमपि न यस्य तिष्ठति, गुरुपदेशो नरेन्द्र इव हृदये । मन्त्ररहस्योद्गारी, मन्त्रीव स दूरतस्त्याज्यः ॥ ६५ ॥ (आर्या)
धर्मो यैर्निहतः प्रमादवशतः प्राप्तेऽपि मानुष्यके, कार्पण्येन विडम्बितौ सति धने यैरर्थकामावपि ।
अत्यन्तं चलचित्तनिग्रहपरैरप्याप्यते वा न वा, मोक्षः शाश्वतिकः प्रसा[प्रमो]दसदनं तेषां दवीयान्पुनः ॥६६॥ (शा०)
आकाशेऽपि चिराय तिष्ठति शिला मन्त्रेण तन्त्रेण वा, बाहुभ्यामपि तीर्यते जलनिधिर्वेधाः प्रसन्नो यदा ।
दृश्यन्ते ग्रहयोगतः सुरपथे प्राण्हेऽपि तागः स्फुटं, हिंसाया पुनराविरस्ति नियतं गन्धोऽपि न श्रेयसः ॥६७॥ (शा०)
निशानां च दिनानां च, यथा ज्योतिर्विभूषणम् । सतीनां च यतीनां च, तथा शीलमखण्डितम् ॥६८॥ (अनुष्टुब्वृत्तम्)

१ यस्य ।

क्षान्ति-
प्रियायाः
सेवनीय-
त्वादिकम्

(अनुष्टुब्वृत्तम्)

मायया राजते वेश्या, शीलेन कुलबालिका । न्यायेन मेदिनीनाथः, सदाचारतया यतिः ॥ ६९ ॥

यावद्व्याधिविबाधया विधुरतामङ्गं न संसेवते, यावच्चेन्द्रियपाटवं न हरति क्रूरा जराराक्षसी ।

(शार्दूल०)

तावन्निष्कलनिश्चलामलपदं कर्मक्षयायाधुना, ध्येयं ध्यानविचक्षणैः स्फुटतरं हृत्पद्मसद्मोदरे ॥ ७० ॥

अज्ञानावृतचेतसो मम महाव्यामूढतां मोहतां, कृत्वा धर्मधनं हृतं यदनिशं वाराणसीधूर्त्तवत् ।

युक्तं तद्विहितं त्वयेदमपि ते युक्तं भवेद्धि ध्रुवं, मां पुण्याप्तगुरुप्रसादमधुना सन्त्यज्य निर्गच्छ रे! ॥ ७१ ॥ (शार्दूल०)

तन्नो नागपतेर्भुजङ्गवनिताभोगोपचारैः परै-स्तन्नो श्रीसविलाससङ्गमशतैः सारैर्मुरारेः किल ।

तन्नो वज्रधरस्य देववनिताक्रीडारसैर्निर्भरै-र्यत्सौख्यं व्रत वीतकाममनसां तत्त्वार्थतो योगिनाम् ॥ ७२ ॥ (शार्दूल०)

(अनुष्टुब्वृत्तम्)

मध्यक्षामतया योषि-त्तपःक्षामतया यतिः । मुखक्षामतया चाश्वो, राजते न तु भूषणैः ॥ ७३ ॥

तन्व्या श्रोत्ररसायनेन वचसा सप्रेमसम्भाषितः, सर्पत्कोपविपाकपाटलरुचा संवीक्षितश्चक्षुषा ।

सद्योगान्न तिलाग्रमात्रमपि यः सङ्क्षोभितुं शक्यते, रागद्वेषविवर्जितो विजयते कोऽप्येष योगीश्वरः ॥ ७४ ॥ (शार्दूल०)

आताम्रायतलोचनातुरमिदं न्यक्कारवाङ्निन्दितं, वद्धभ्रूकुटिभालभीममधरप्रस्पन्ददुर्दर्शनम् ।

व्यालोलालकसङ्कुलं कृशतनोः कोपेऽपि कान्तं मुखं, पश्यन्ति स्मरविह्वलीकृतहृदो ही !! कामिनां मूढता ॥७५॥ (शा०)

कौशल्यं प्रविलीयते विकलता सर्वाङ्गमाश्लिष्यते, ज्ञानश्रीः प्रलयं प्रयाति कुमतिः प्रागल्भ्यमभ्यस्यति ।

धर्मोऽपि प्रपलायते कलयति स्थेमानमंहः परं, यस्माच्छोकवशात्कथं स विदुषां संसेवितुं युज्यते ? ॥ ७६ ॥ (शार्दूल०)

क? कफार्त्तं मुखं नार्याः, क? पीयूषनिधिः शशी । आमनन्ति तयोरैक्यं, कामिनो मन्दबुद्धयः ॥७७॥ (अनुष्टुब्वृत्तम्)

पाशे कुरङ्गनिवहो [नु] न (?) पतत्यविद्वान्, दाहात्मतामकलयञ्छलभः प्रदीपे ।
जानन्नहं पुनरमून् करिकर्णलोलान्, भोगाँस्त्यजामि न तथापि क एष मोहः? ॥ ७८ ॥ (वसन्ततिलका)

ज्ञानमेव परं मित्रं, काम एव परः परः । अहिंसैव परो धर्मो, योषिदेव परा जरा ॥ ७९ ॥ (अनुष्टुब्वृत्तम्)

धिक्कन्दर्प! जगत्रयीविजयिनो दोःस्थामविस्फूर्जितं, विद्वान्कः किल तावकीनमधुना व्यालोकतामाननम् ।
दृष्ट्वा यौवनमित्रमत्रपभवान्सर्पज्जराराक्षसी–चक्रान्तःपतितं विमुञ्चति न यः कोदण्डकेलिक्रमम् ॥ ८० ॥ (शार्दूल०)

तृष्णावारितरङ्गभङ्गविलसत्कौटिल्यवल्लीरुह–स्तिर्यक्प्रेक्षितवाक्प्रपञ्चकवरीपाशभ्रुवः पल्लवाः ।
यस्या मान्ति न तुच्छके हृदि ततः स्थानं बहिः कुर्वते, कस्ताश्चञ्चलचक्षुषः कुशलधीः संसेवितुं वाञ्छति? ॥८१॥ (शा०)

रे रे मोह! हताश! तावकमिदं धिक्पौरुषोज्जृम्भितं, विस्रब्धं भवसागरे किल भवान्संयम्य मां क्षिप्तवान् ।
सम्प्रत्याप्तगुरूपदेशफलकः पारं मयातोऽस्म्यहं, शौण्डीर्यं तव विद्यते यदधुना दोष्णोस्तदा दर्शय ॥ ८२ ॥ (शार्दूल०)

रे कन्दर्प! किमाततज्यमधुना धत्से? धनुस्त्वं मुधा, किं भ्रूलास्यकलासु पक्ष्मलदृशः प्रागल्भ्यमभ्यस्यथ? ।
वैराग्याम्बुजिनीप्रबोधनपटुः प्रध्वस्तदोषाकरः, खेलत्येष विवेकचण्डकिरणः कस्त्वादृशामुत्सवः? ॥ ८३ ॥ (शार्दूल०)

अन्यं प्रियालापपथं नयन्ते, किञ्चित्कटाक्षैरपरं स्पृशन्ति ।
अन्यं हृदा कञ्चन मन्त्रयन्ते, धिग्योषितां चञ्चलचित्तवृत्तिम् ॥ ८४ ॥ (इन्द्रवज्रा)

कामिजनस्य मन्दबुद्धित्वादिकम्

यात्रायै वचनक्रमं रचयतः पादौ परिभ्रान्तये, नेत्रे रोषकषायितानि वदनान्यालोकितुं स्वामिनाम् ।
धातश्चेन्न दयालुता तव हृदि स्थानं ववन्ध क्षणं, तत्किं हन्त !! परिश्रमोऽपि निकटीभूयं न सम्पन्नवान् ? ॥८५॥ (शा०)

रक्षाकृते धनलवस्य विमूढचेता, लोकः परं किमपि सन्तनुते प्रयत्नम् ।
तल्लक्षकोटिभिरनाप्यमपीदमायुः, कालो निकृन्तति न तन्नु शङ्कतेऽपि ॥ ८६ ॥ (वसन्ततिलका)

बन्धो ! क्रोध ! विधेहि किञ्चिदपरं स्वस्याधिवासास्पदं, भ्रातर्मान ! भवानपि प्रचलतु त्वं देवि माये ! व्रज ।
हंहो लोभसखे ! यथाऽभिलषितं गच्छ द्रुतं वश्यतां, नीतः शान्तरसस्य सम्प्रति लसद्वाचा गुरूणामहम् ॥८७॥ (शा०)

मनो न वैराग्यतरङ्गितं चे-द्वृथा तदा दानतपःप्रयासः ।
लावण्यमङ्गे यदि नाङ्गनानां, मुधा तदा विभ्रमवल्गितानि ॥ ८८ ॥ (रामा)

विद्याः कलाः परिचिता यदि तास्ततः किं ?, तप्तं तपो यदि तदुग्रतरं ततः किम् ? ।
कीर्तिः कलङ्कविकला यदि सा ततः कि-मन्तर्विवेककलिका यदि नोल्ललास ॥ ८९ ॥ (वसन्ततिलका)

स्फूर्जल्लोभकरालवक्त्रकुहरो हुङ्कारगुञ्जारवः, कामक्रोधविलोललोचनयुगो मायानखश्रेणिभाक् ।
स्वैरं यत्र स वम्भ्रमीति सततं मोहाह्वयः केसरी, तां संसारमहाऽटवीं प्रतिवसन्को नाम जन्तुः सुखी ? ॥ ९० ॥ (शा०)

---

१ चतुर्दशभेदभिन्नाया उपजातेरेकादशोऽयं भेदः, यत्र तृतीयं चरणमिन्द्रवज्रायाः शेषं चरणत्रिकं चोपेन्द्रवज्राया भवति ।

एकः स वैवस्वत एव देव', शौण्डीर्यशाली च महाव्रती च ।
पशौ च गीर्वाणपतौ च यस्या-विभिन्नमुद्रस्य दृशः पतन्ति ॥ ९१ ॥ (उपजातिः)

एतानि तानि मदनज्वलनेन्धनानि, दूरीकुरुष्व मयि वक्रविलोकितानि ।
उन्मीलतिस्म ललिताङ्ग्यधुना स एव, मन्मानसे शुचिविवेककलाविलासः ॥ ९२ ॥ (वसन्वतिलका)

प्रत्यक्षो नरक' स एप वसुधापीठे परायत्तते-त्येवं पूत्कुरुते जनः प्रतिकलं सर्वोऽपि विद्वानिह ।
तन्नारीवशवर्त्तिनोऽपि विपयान्कण्डूतिकल्पानयं, रोमाञ्चाङ्कुरचर्चिताङ्गलतिकः किं नाम नैवोज्झति? ॥९३॥ (शार्दूल०)

ता एवैताः कुवलयदृशः सैप कालो वसन्त-स्ता एवान्तःशुचिवनभुवस्ते वयं ते वयस्याः ।
किन्तूद्भूत. स खलु हृदये तत्त्वदीपप्रकाशो, येनेदानीं हसति हृदयं यौवनोन्मादलीला ॥ ९४ ॥ (मन्दाक्रान्ता)

को देवो? वीततमा', कः सुगुरु'? शुद्धमार्गसम्भापी । किं परमं विज्ञानं?, स्वकीयगुणदोपविज्ञानम् ॥ ९५ ॥ (आर्या)

यत्कारुण्यहिरण्यजं न न च यत्सन्मार्गताम्रोद्भवं, नो यत्सयमलोहजन्म न च यत्सतोपमृत्स्नामयम् ।
यद्योग्यं न तपोविधानदहनज्वालावलीतेजसा, सिद्धिं याति? कथं नृधान्यनिकरस्तस्मिन् कुपात्रे श्रितः ॥९६॥ (शार्दूल०)

हे मोहाहतजीव! हुं शृणु वचः श्रद्धाऽस्ति चेत्कथ्यता, प्राप्तं किञ्चन सत्फलं भवमहाऽटव्यां त्वया भ्राम्यता ।
भ्रातर्नैव तथाविधं किमपि तन्निर्वाणदं तर्हि किं, शून्यं पश्यसि? पङ्गुवन्नु गतं नोपक्रमे तिष्ठति ॥ ९७ ॥ (शार्दूल०)

शौक्ल्ये हंसवकोटयोः सति समे यद्वद्भतावन्तर, कार्ष्ण्ये कोकिलकाकयोः किल यथा भेदो भृशं भापिते ।

पैत्ये हेमहरिद्रयोरपि यथा मूल्ये विभिन्नार्घता, मानुष्ये सदृशे तथाऽऽर्यखलयोर्दूरं विभेदो गुणैः ॥ ९८ ॥ (शार्दूल०)

त्वद्दृष्टिपातनिहताः खलु तेऽन्य एव, धैर्यव्रतं सुतनु! ये परिमार्जयन्ति ।
अन्ये त्वमी शुचिविवेकपवित्रचित्ता–स्तत्किं विडम्बयसि? मन्मथविभ्रमैः स्वम् ॥ ९९ ॥ (वसन्ततिलका)

सम्पत्स्यते? मम कदाचन तद्दिनं किं, सद्ध्यानरूढमनसः सततं भवेयुः ।
आनन्दविन्दुविशदानि सुधामयानि, यत्रेक्षितानि मयि मुक्तिमृगेक्षणायाः ॥ १०० ॥ (वसन्ततिलका)

ललितं सत्यसंयुक्तं, सुव्यक्तं सततं मितम् । ये वदन्ति सदा तेषां, स्वयं सिद्धैव भारती ॥ १०१ ॥ (अनुष्टुब्वृत्तम्)

सिक्तः श्रीजिनवल्लभस्य सुगुरोः शान्तोपदेशामृतैः, श्रीमन्नागपुरे चकार सदनं श्रीनेमिनाथस्य यः ।
श्रेष्ठी श्रीधनदेव इत्यभिधया ख्यातश्च तस्याङ्गजः, पद्मानन्दशतं व्यधत्त सुधियामानन्दसम्पत्तये ॥ १०२ ॥ (शार्दूल०)

सम्पूर्णेन्दुमुखीमुखे न च न च श्वेतांशुबिम्बोदये, श्रीखण्डद्रवलेपने न च न च द्राक्षारसास्वादने ।
आनन्दः स सखे! न च क्वचिदसौ किं भूरिभिर्भाषितैः?, पद्मानन्दशते श्रुते किल मया यः स्वादितः स्वेच्छया ॥१०३॥

इति श्रीजिनवल्लभसूर्युपासकश्रेष्ठिवरधनदेवाङ्गज–कविवर–श्रीपद्मानन्दप्रणीतं
वैराग्यरसनिभृतं वैराग्यशतमित्यपराभिधानं पद्मानन्दशतं समाप्तम् ।

नाम्ना मोहनलालेति, विख्यातं जगतीतले । सुविहितक्रियासक्तं, जैनशासनमण्डनम् ॥ १ ॥
गणिर्बुद्धिलब्धिरेषो हि, प्रशिष्यस्यापि शिष्यकः । भक्त्या स्मरति यं नित्यं, भद्रं ददातु सोऽन्वहम् ॥ २ ॥

इति श्रीपद्मानन्दकविप्रणीतं पद्मानन्दशतं समाप्तम् ।

श्रेष्ठि-देवचन्द लालभाई-जैन-पुस्तकोद्धारे—

स्तम्भनपार्श्वप्रतिमाप्रकटननवाङ्गवृत्तिकरणप्रवणश्रीमदभयदेवसूरिपट्टप्रभाकरसुविहितचक्रचूडामणिश्रीमज्जिनवल्लभसूरिवरप्रणीतं,
श्रीमज्जिनपतिसूरिपट्टप्रकाशनदिनकरश्रीमज्जिनेश्वरसूरिविनेयवरश्रीधर्मतिलकमुनिविरचितविवरणसमलङ्कृतम्,

उल्लासिक्कमेति प्रसिद्धाख्यं

# लघ्वजितशान्तिस्तवनम् ।

( सच्छायम् )



अजितशान्तिजिनौ भुवनत्रये, विजयशान्तिविधौ प्रथितौजसौ ।
समभिनम्य तयोः स्तवसङ्गतं, विवरण विदधे किमपि स्फुटम् ॥ १ ॥ –द्रुत०*

इह हि किलैकदा वर्णनातिक्रान्तानुपमभागधेयाः सुगृहीतनामधेया सकललोकसश्लाघ्यमहार्घ्यविमलगुणमणिश्रेणयः

* "द्रुतविलम्बितमाह नभौ भरौ ॥ ५० ॥" { नगण –भगण –भगण –रगण / ।।। ऽ।। ऽ।। ऽ।ऽ } पादे यतिरिति वृत्तरत्नाकर ।

॥ १ ॥

मङ्गलाभिधेयादिकथनपूर्वकं भगवतोः स्तुतिप्रतिज्ञा

सविघ्नमुनिजनव्रातचूडामणयः स्वप्रज्ञाऽतिशयविशेषविनिर्जितामरसूरयः श्रीजिनवल्लभसूरयः श्रीअजितशान्त्योः स्तवनं चतुर्विधश्रीश्रमणसङ्घश्रेयस्करं सप्तदशवृत्तप्रमाणं विशेषतः पाक्षिकादिपर्वणि पाठ्यं चिकीर्षवः प्रथममुत्प्रेक्षालङ्कारं* सारं शार्दूलच्छन्दसा वृत्तेन भगवत्स्तुतिप्रतिज्ञा चक्रिरे—

उल्लासिक्कमनक्खनिग्गयपहादंडच्छलेणंऽगिणं, वंदारूण दिसंत इव पयडं निव्वाणमग्गावलिं।

( उल्लासिक्रमनखनिर्गतप्रभादण्डच्छलेनाङ्गिना, वन्दारूणा दिशन्ताविव प्रकटं निर्वाणमार्गावलिम्। )

कुंदिंदुज्जलदंतकंतिमिसओ नीहंतनाणंऽकुरु-क्करे दोवि दुइज्जसोलसजिणे थोसामि खेमंकरे ॥१॥ —शार्दूल०†

( कुन्देन्दूज्ज्वलदन्तकान्तिमिषतो निर्यज्ज्ञानाङ्कुरो-त्करौ द्वावपि द्वितीयषोडशजिनौ स्तोष्यामि क्षेमङ्करौ ॥ १ ॥ )

विव०—स्तोष्यामि—कीर्तयिष्यामि । अहमित्यध्याहारः। कौ कर्मतापन्नौ ?, द्वावपि। कौ द्वौ ?, द्वितीयषोडशजिनौ अजितशान्तिनामानौ। कीदृशौ ?, क्षेमङ्करौ। क्षेमं—श्रेयः कुरुतः क्षेमङ्करौ, तौ। पुनः किंविशिष्टौ ?, दिशन्ताविव—प्रतिपादयन्ताविव। 'इव'शब्द उत्प्रेक्षायाम्। काम् ?, निर्वाणमार्गावलिं—मोक्षपथश्रेणिम्। केषाम् ?, अङ्गिनां—प्राणिनाम्। किंविधानाम् ?, वन्दारूणा—नमस्कृतिकृताम्। कथम् ?, प्रकटं—[स्फुटं]स्पष्टम्। केन ?, उल्लासिक्रमनखनिर्गतप्रभादण्डच्छलेन।

* "कल्पना काचिदौचित्या-द्यत्रार्थस्य सतोऽन्यथा। द्योतितेवादिभिः शब्दै-रुत्प्रेक्षा सा स्मृता यथा ॥ ९० ॥" इति वाग्भटालङ्कारे।

† "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥१११॥" { मगण—सगण—जगण—सगण—तगण—तगण—गुरु / SSS IIS ISI IIS SSI SSI S } द्वादशभिः सप्तभिश्च यतिरिति वृत्तरत्नाकरे।

क्रमाणां–अंह्रीणां नखा–नखराः, तेभ्यो निर्गता याः प्रभाः–कान्तयः, तेषां दण्डाः–सम्मिलितरुचिप्रपञ्चाः । उल्लासिन–ऊर्ध्वं-मुखं गच्छन्तो ये क्रमनखनिर्गतप्रभादण्डाः, तेषां छलं–व्याजः, तेन । यः किल य मार्गं दर्शयति स तदभिमुखं दण्डादिकं व्यापार्य दर्शयति, ततो भगवतोरपि ऊर्ध्वोल्लसत्पदनखकिरणदण्डौ प्रणमतः प्रति मुक्तिमार्गं ऊर्ध्वं वर्तमानं दर्शयन्ताविवो-त्प्रेक्ष्यते । तथा पुनः कीदृशौ ?, निर्यज्ज्ञानाङ्कुरोत्करौ, ज्ञानस्याङ्कुरा ज्ञानाङ्कुराः, तेषां उत्करः–समूहः, निर्यन्–निर्गच्छन् ज्ञानाङ्कुरोत्करो यकाभ्यां तौ निर्यज्ज्ञानाङ्कुरोत्करौ । कस्मात् ?, कुन्देन्दूज्ज्वलदन्तकान्तिमिषतः । कुन्दं–माघ्यं पुष्पं, इन्दुश्चन्द्रः, तयोरिवोज्ज्वलाः–शुभ्रा ये दन्ता–रदास्तेषां कान्तिः–प्रभा, तस्या मिषं–व्याजः, तस्मात् । एतेन भगवतोर्ज्ञानश्रेष्ठत्व-मुक्तं स्यात् ॥ १ ॥

भगवत्स्तुतिप्रतिज्ञां [प्रतिज्ञाय] स्वस्य राभसिक्यविलसितं दर्शयितुं भगवत्स्तुतावसामर्थ्यमाह—

चरमजलहिनीरं जो मिणिज्जंऽजलीहिं, खयसमयसमीरं जो जिणिज्जा गईए ।

( चरमजलधिनीरं यो मिनुयादञ्जलिभिः, क्षयसमयसमीरं यो जयेद्गत्या । )

सयलनहयलं वा लंघए जो पएहिं, अजियमहव संतिं सो समत्थो थुणेउं ॥ २ ॥ –मालिनी[2]

( सकलनभस्तलं वा लङ्घयेद्यः पदैः, अजितमथवा शान्तिं स समर्थः स्तोतुम् ॥ २ ॥ )

---

१ "माघे भव माघ्यम्" इत्यमरवृत्तौ । २ "ननमयययुतेयं मालिनी भोगिलोकैः ॥८४॥" { नगण –नगण –मगण –यगण –यगण / ।।। ।।। ऽऽऽ ।ऽऽ ।ऽऽ } अष्टभिस्सप्तभिश्च यतिरिति वृत्तरत्नाकरे तृतीयेऽध्याये ।

विव०—'स समर्थः' स शक्तः। किं कर्तुम् ?, स्तोतुं—उत्कीर्तयितुम्। कम् ?, अजितं—द्वितीयतीर्थकरम्। अथवेति समुच्चये। शान्तिं च—षोडशं जिनम्। यः किम् ?, यो मिनुयात्—एतावदेतदिति प्रमाणं कुर्यात्। किम् ?, चरमजलधिनीरं—स्वयम्भूरमणसमुद्रजलम्। कैः ?, अञ्जलिभिः—प्रसृतिभिः, इतरसरोवरादिजलमप्यञ्जलिभिर्मातुं न शक्यते, किं पुनः समुद्रस्य ?, तत्रापि स्वयम्भूरमणसमुद्रस्य ?, परं तदपि यो मिनुयात्। तथा यो जयेत्—पराभवेत्। कम् ?, क्षयसमयसमीरं—प्रलयकालवातम्। कया ?, गत्या—पादचङ्क्रमणेन। अन्योऽपि वातो गत्या जेतुं न शक्यते, क्व पुनः क्षयसमयसमीरः ?, परं तमपि यः स्वगत्या पृष्ठे पातयित्वा पुरो याति। तथा [वा—अथवा] यो लङ्घयेत्—आ[अति]क्रमितुं समर्थः स्यात्। किम् ?, सकलनभस्तलं—सर्वाकाशमण्डलम्, न पुनरेकदेशतः। [काभ्यां ?, पादाभ्यां]। समुद्रादिकमपि लङ्घयितुं न शक्यते, आस्तां नभस्तलम्, तत्रापि सकलम्, परं तदपि यो लङ्घयेत्, स समर्थः। 'स्तोतुम्' इति पदं त्रिष्वपि यच्छब्देषु प्रत्येकं योजनीयम्। अयमभिप्रायः—चरमजलधिनीरमानं क्षयसमयसमीरजयनं सकलनभस्तललङ्घनं च पटुरपि न कोऽपि कर्तुं समर्थः, एवं निरुपममहिमासमुद्रयोर्भगवतोर्गुणोत्कीर्तनमपीत्यर्थः ॥ २ ॥

यदि नाम एवं उक्तयुक्त्या भगवद्गुणोत्कीर्तने कस्यापि प्रागल्भ्यं नावलोक्यते, तर्हि किमिति तव तावत्तत्रोद्यमः ? कथं च तत्प्रमाणपदवीमारोक्ष्यतीत्याशङ्क्याह—

तहवि हु बहुमाणुल्लासिभत्तिभरेणं, गुणकणमवि कित्तेहामि चिंतामणिव।

(तथापि खलु बहुमानोल्लासिभक्तिभरेण, गुणकणमपि कीर्तयिष्यामि चिन्तामणिमिव।)

अलमहव अचिंताणंतसामत्थओ सिं, फलिहइ लहु सवं वंछियं णिच्छियं मे ॥ ३ ॥ –मालिनी

( अलमथवा अचिन्त्यानन्तसामर्थ्यादनयोः, फलिष्यति लघु सर्वं वाञ्छितं निश्चितं मे ॥ ३ ॥ )

विव०–यद्यप्येवमस्ति तथापि ( हुरिति निश्चयेन ) कीर्तयिष्यामि–स्तोष्ये । कम् ?, गुणकणमपि–गुणलेशमपि । अर्थादजितशान्त्योरिति गम्यते । यद्यपि भगवद्गुण एकोऽपि सामस्त्येन वर्णयितुं न शक्यते, तथापि गुणस्य लेशमप्यहं उत्कीर्तयिष्यामि । केन ?, बहुमानोल्लासिभक्तिभरेण । बहुमानेन–आन्तरप्रीतिविशेषेणोल्लासिनी–प्रवर्धमाना चासौ भक्तिः–शिरोनमनाञ्जलिबन्धादिरूपा च, तस्या भरः–प्राग्भारस्तेन । ननु गुणलेशस्तवनेन किं सेत्स्यति ? इत्यत्राह–चिन्तामणिमिव–चिन्तामणिसदृशं, यथा स्वल्पोऽपि चिन्तामणिः स्तुतः सर्वं समीहितं पूरयति, तथा भगवद्गुणलेशोऽपीत्यर्थः । अथवा अलं–कृतं । एतन्मम प्रारब्धं सेत्स्यति न वेति विचारेणेति गम्यते । कुतः ? इत्याह—फलिष्यति–सम्पत्स्यते । किम् ?, वाञ्छितं–समीहितम् । कस्य ?, मे–मम । कीदृशम् ?, सर्वं–समस्तम् । आस्तां स्तवकरणमात्रं, अन्यदपि सेत्स्यतीत्यर्थः । कथम् ?, लघु–शीघ्रम् । पुनः कथम् ?, निश्चितं–निस्संशयम् । कस्मात् ?, अचिन्त्यानन्तसामर्थ्यतः । अचिन्त्यं–चिन्तयितुमशक्यं, अनन्तं–अपर्यवसानं, तच्च तत्सामर्थ्यं च–प्रभावश्च, तस्मात् । कयोः ?, 'सिं' इत्यनयोरजितशान्त्योः । "वेदं–तदेतदोः ङसाम्भ्यां से–सिमौ" ( ८-३-८१ है० ) इत्यनेन इदमः आमा सह सिमादेश इति ॥ ३ ॥

भगवन्माहात्म्यात् समस्तं वाञ्छितं सेत्स्यत्येवेति समर्थयितुं भगवन्नाममात्रस्यापि प्रभावातिशयं दर्शयन् भगवन्तौ प्रति प्रणाममाह—

सयलजयहियाणं नाममित्तेण जाणं, विहडइ लहु दुट्ठाणिट्ठदोघट्ट्य(थ)ट्टम् ।

( सकलजगद्धितयोर्नाममात्रेण ययोः, विघटते लघु दुष्टानिष्टदोघट्ट्य(थ)ट्टः । )

नमिरसुरकिरीडुग्घिट्ठपायारविंदे, सययमजियसंती ते जिणिंदेऽभिवंदे ॥ ४ ॥ —मालिनी

( नम्रसुरकिरीटोद्घृष्टपादारविन्दौ, सततमजितशान्ती तौ जिनेन्द्रावभिवन्दे ॥ ४ ॥ )

विव०–[ सततं–निरन्तरं ] अभिवन्दे–सर्वादरेण स्तुवे । कौ ?, तौ–जिनेन्द्रौ । किंनामानौ ?, अजितशान्ती । किंविधौ ?, नम्रसुरकिरीटोद्घृष्टपादारविन्दौ । नम्रा–नमनशीला ये सुरा वैमानिकादयस्तेषां किरीटानि–मुकुटानि, तैरुद्घृष्टे–उत्तेजिते पादारविन्दे–चरणकमले ययोस्तौ । तावभिवन्दे, ययोः सकलजगद्धितयोर्नाममात्रेण, गृहीतेनेति शेषः । किं ?, विघटते–विद्रवति । कः ?, दुष्टानिष्टदोघट्ट्य(थ)ट्टः । दुष्टानि–दुःखजनकानि च तानि अनिष्टानि च प्रियविप्रयोगादीनि, तान्येव दोघट्टा–हस्तिनस्तेषां घ(थ)ट्टः–समूहः । अत्र प्राकृतत्वात् नपुंसकत्वम् । कथम् ?, लघु–शीघ्रं । सर्वत्र प्राकृतत्वात् द्विवचनेऽपि बहुवचनम् । एवमग्रेतनेष्वपि वृत्तेषु ज्ञेयम् ॥ ४ ॥

सम्प्रत्यनयोरेव भगवतोः पदभक्तिप्रभावं दर्शयति—

पसरइ वरकित्ती वड्ढए देहदित्ती, विलसइ भुवि मित्ती जायए सुप्पवित्ती ।

( प्रसरति वरकीर्तिः वर्धते देहदीप्तिः, विलसति भुवि मैत्री जायते सुप्रवृत्तिः । )

फुरइ परमतित्ती होइ संसारछित्ती, जिणजुयपयभत्ती ही अचिंतोरुसत्ती ॥ ५ ॥ — मालिनी

( स्फुरति परमतृप्तिः भवति ससारछित्तिः, जिनयुगपद्भक्तिर्ह्री अचिन्त्योरुशक्तिः ॥ ५ ॥ )

पिय०—वर्तते । काऽसौ ?, जिनयुगपदभक्तिः । जिनयोः—अजितशान्त्योः, युगं—युग्मं, तस्य पदाः—चरणास्तेषु भक्तिः—आन्तरा प्रीतिः प्रवर्तितशिरोनमनादिरूपा । कीदृशी ?, अचिन्त्योरुशक्तिः । अचिन्त्या—चिन्तयितुमशक्या उर्वी—गरिष्ठा शक्तिः—सामर्थ्यं प्रभावो यस्याः सा तथोक्ता । 'ही' इति शब्द आश्चर्ये । तथा च माघः—"ही विचित्रो विपाकः" इति । कथं विज्ञायते ? इत्यत्राह—प्रसरति—विस्तारं गच्छति वरकीर्तिः—प्रधानं यशः, जिनपदयुगभक्तित इति गम्यम् । एवमग्रेऽपि । तथा वर्धते देहदीप्तिः—उज्जृम्भते शरीरकान्तिः । तथा विलसति भुवि मैत्री—विस्फूर्जति क्षितौ प्रीतिः । तथा जायते—सम्पद्यते शोभना सफलत्वेन प्रवृत्तिः—व्यापारः सुप्रवृत्तिः । तथा स्फुरति परमतृप्तिः—उल्लसति परमसन्तोषः । भवति ससारछित्तिः—सम्पद्यते भवविच्छेद इति ॥ ५ ॥

अथ देवाङ्गनानां भगवद्विषये नृत्यपूजाप्रतिपादनद्वारेण स्तुतिमाह—

ललियपयपयारं भूरिदिव्वंगहारं, फुडघणरसभावोदारसिंगारसारं ।

( ललितपदप्रचार भूरिदिव्याङ्गहार, स्फुटघनरसभावोदारशृङ्गारसारम् । )

अणिमिसरमणी जद्दंसणच्छेयभीया, इव पणमणमंदा कासि नट्टोवहारं ॥ ६ ॥ — मालिनी

( अनिमिषरमण्यो यद्दर्शनच्छेदभीताः, इव प्रणमनमन्दा अकार्षुर्नृत्योपहारम् ॥ ६ ॥ )

विव०—अत्राग्रेतनवृत्तस्थं 'थुणह अजियसंती ते' इति तच्छन्दप्रधानं वाक्यं सम्बध्यते। ततश्च तावजितशान्ती स्तुत–वर्णयत। 'जइंसणच्छेयभीया इव पणमणमंदा कासि नट्टोवहार'मिति सम्बन्धः। अकार्षुः–विदधुः। काः?, अनिमिषरमण्यः। प्राकृतत्वादत्र विभक्तिलोपः। अनिमिषाः–देवाः, तेषां रमण्यः–स्त्रियः। कम्?, नृत्योपहारम्। नृत्येन–नर्तनेन उपहारः–पूजा, तम्। कीदृश्यः?, प्रणमनमन्दाः। प्रणमने–न्यञ्चमस्तककरणे मन्दाः–अलसाः। किल नर्तक्यः प्रायः सम्मुखमवलोकयन्त्य एव नृत्यं कुर्वन्तीति स्वभावः। ततः कविनोत्प्रेक्ष्यते–न स्वभावतो, यद्दर्शनच्छेदभीता इव। ययोरजितशान्त्योर्दर्शनं–अवलोकनं भवशतेष्वपि दुष्प्रापं, तस्य छेदः–अन्तरायस्ततो भीता इव–चकिता इव, भूयोऽपि दुर्लभं भगवद्दर्शनं इति तदन्तरायं प्रणामकालभाविनमप्यसहन्त्य इत्यर्थः। कीदृशं नृत्योपहारम्?, ललितपदप्रचारं। ललिताः–रमणीयाः पदप्रचाराः–स्वचरणन्यासा यत्र, तम्। पुनः किंविधम्?, भूरिदिव्याङ्गहारं। भूरयः–प्रभूता दिव्याः–परमोत्कर्षशालिनो अङ्गहाराः–अङ्गविक्षेपा यत्र, तम्। भूयोऽपि कीदृक्?, स्फुटघनरसभावोदारशृङ्गारसारम्। स्फुटः–व्यक्तः, घनः–सान्द्रो योऽसौ रसः–शृङ्गारो भावो–रतिस्ताभ्यां उदारो योऽसौ शृङ्गारो–विभूषाप्रकारस्तेन सारं–प्रधानम्। भावशृङ्गाररसाभ्यां बन्धुरमित्यर्थः॥ ६॥

सम्प्रति भगवतोर्वर्णवर्णनापूर्वकं स्तुतिमाह—

थुणह अजियसंती ते कयासेससंती, कणयरयपिसंगा छज्जए जाण मुत्ती।
(स्तुत अजितशान्ती तौ कृताशेषशान्ती, कनकरजःपिशङ्गा राजते ययोर्मूर्तिः।)

सरभसपरिरंभारंभिनिव्वाणलच्छी-घणथणघुसिणंकुप्पंकपिंगीकयव्व ॥ ७ ॥ —मालिनी

( सरभसपरिरम्भारम्भिनिर्वाणलक्ष्मी-घनस्तनघुसृणाङ्कोत्पङ्कपिङ्गीकृता इव ॥ ७ ॥ )

व्याख्या—स्तुत-नुत भो भव्याः !, कौ कर्मतापन्नौ ?, तौ अजितशान्ती । कीदृशौ ?, कृताशेषशान्ती । कृता—विहिता अशेषा—सम्पूर्णा जगत्त्रये शान्तिः—शिवं याभ्यां तौ । ययोः किं ?, 'छज्जए' इति राजते "राजेरग्घ-छज्ज-सह-रीर-रेहा" [ ८-४-१०० है० ] इति 'राजि' धातोश्छज्जादेशः । काऽसौ ?, मूर्तिः—तनुः । कीदृशी ?, कनकरजःपिशङ्गा । कनकस्य रजः—चूर्णं, तद्वत् पिशङ्गा—पीता, भगवतोः सुवर्णवर्णा मूर्तिरेषः स्वभावः, परं कविनोत्प्रेक्ष्यते—न स्वभावतः, किं तर्हि ?, सरभसपरिरम्भारम्भिनिर्वाणलक्ष्मीघनस्तनघुसृणाङ्कोत्पङ्कपिङ्गीकृतेव । सरभसं—सौत्सुक्यं यथा भवति, एवं परिरम्भ-आलिङ्गनं, तं आरभते—करोतीत्येवंशीला सरभसपरिरम्भारम्भिणी, सा चासौ निर्वाणलक्ष्मीश्च—मुक्तिनायिका च, तस्या घनौ—पीनौ च तौ स्तनौ च, तयोर्योऽसौ घुसृणाङ्कः—कुङ्कुमविभूषा, तस्योत्कृष्टः पङ्को—द्रवः, तेन पिङ्गीकृतेव—पिञ्जरितेव । इह नायिकाः सकामाः शृङ्गारिण्यो नवयौवने निजस्तनकलशयोः कुङ्कुमेन मण्डनं कुर्वन्ति । ततो यदा गाढानुरागेण प्रियतमस्यालिङ्गनं कुर्वते तदा तत् स्तनमण्डनेन तस्याङ्गं पिञ्जरितं भवति, भगवतोरपि मुक्तेर्वधूत्वेन निरूपिताया आलिङ्गनं सम्भाव्यैवमुत्प्रेक्ष्यतेति भावः ॥ ७ ॥

सम्प्रति प्रमाणसुप्रतिष्ठस्याद्वादोपदेशकत्वद्वारेण भगवतोः स्तुतिमाह—

बहुविहनयभंगं वत्थु णिचं अणिचं, सदसदणभिलप्पालप्पमेगं अणेगं ।
( बहुविधनयभङ्गं वस्तु नित्यमनित्यं, सदसदनभिलाप्याभिलाप्यमेकमनेकम् । )
इय कुनयविरुद्धं सुप्पसिद्धं च जेसिं, वयणमवयणिज्जं ते जिणे संभरामि ॥ ८ ॥ —मालिनी
( एवं कुनयविरुद्धं सुप्रसिद्धं च ययो-र्वचनमवचनीयं तौ जिनौ संस्मरामि ॥ ८ ॥ )

व्याख्या—तौ-अजितशान्ती संस्मरामि-ध्यायामि। कीदृशौ?, जिनौ-रागादिदोषजयिनौ, आप्ताविति यावत्। आप्तिर्हि दोषक्षयमुच्यते, सा विद्यते ययोस्तावाप्तौ । आप्तत्वं च प्रमाणोपपन्नार्थवादित्वेनानुमीयते इति भगवतोर्वचनविशुद्धिमाह—'जेसिं' ययोर्वचनं स्याद्वादलक्षणमर्थतो द्वादशाङ्गरूपं "अत्थं भासइ अरिहा, सुत्तं गुंथंति गणहरा निउणं"* इति वचनादस्तीति गम्यते। कीदृशम् ?, 'इय'-एवंप्रकारवस्तुप्रतिपादकम्। तमेव वस्तुप्रकारमाह—वस्तु वर्तते। किं-रूपम् ?, अनन्तधर्मात्मकं वस्तु स्वमतधर्मविशिष्टं नयन्ति-गोचरयन्ति संवेदनमारोपयन्तीति नयाः, वस्त्वेकदेशपरामर्शा इत्यर्थः। तथा चोक्तम्-"एकदेशविशिष्टोऽर्थो, नयस्य विषयो मतः" इति [ न्यायावतारः श्लो० २९ ]। ते अनन्तधर्माध्यासितत्वाद्वस्तुनस्तेषां अनन्तता, तथापि सर्वत्र प्रसिद्धत्वात् सप्त भेदा वर्ण्यन्ते। अन्येषां तेष्वेवान्तर्भावात्। ते चामी—नैगम-सङ्ग्रह-व्यवहार-ऋजुसूत्र-शब्द-समभिरूढ-एवम्भूताख्याः सप्त नयाः। तेषां च मध्ये नैगमाद्याश्चत्वारोऽप्यर्थनयाः, अर्थमेव प्राधान्येन शब्दोपसर्जनमिच्छन्ति। शब्दाद्यास्तु त्रयः शब्दनयाः, शब्दप्राधान्येनार्थमिच्छन्ति।

* अर्थं भाषतेऽर्हन्तः, सूत्रं ग्रथ्नन्ति गणधरा निपुणम्।

(१) तत्र नैगमस्येदं स्वरूपम्, यथा–निगम्यन्ते–विविधं परिच्छिद्यन्ते निगमा–घटादयोऽर्थास्तेषु भवो नैगमः। अथवा सामान्यविशेषात्मकस्य वस्तुनो न एकेन प्रकारेण गमः–परिच्छेदो नैकगमः। अयं हि सत्तालक्षणं महासामान्यमवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वजातीयत्वादीनि तथाऽन्त्यविशेषानसाधारणरूपलक्षणान् अवान्तरविशेषांश्च परमाणुप्रभृतिपदार्थान् गुणादीन् वाऽभिप्रैति। अयं च नैगमः सामान्यविशेषात्मकवस्तुसमाश्रयणेऽपि न सम्यग्दृष्टिः, भेदेनैव सामान्यविशेषयोराश्रयणात्, तन्मताश्रितनैयायिकवैशेषिकवत् ॥ १ ॥

(२) अधुना सङ्ग्रहस्वरूपं दर्श्यते–तत्र सङ्गृह्णाति समस्तविशेषप्रतिक्षेपद्वारेण सामान्यरूपतया सकलं वस्त्विति सङ्ग्रहः। यथाहि–समस्तुनानुगतमविशेषस्वभावमेव सत्तारूपं वस्तु, सत्ताव्यतिरिक्तस्य त्ववस्तुत्वं, खरविषाणस्येवेति। स च सङ्ग्रहः सामान्यविशेषात्मकस्य वस्तुनः सामान्यांशस्यैवाश्रयणान्मिथ्यादृष्टिः, तन्मताश्रितसांख्यवत् ॥ २ ॥

(३) व्यवहारनयस्य तु स्वरूपमिदं–व्यवह्रियते लौकिकैरनेनाभिप्रायेणेति व्यवहारः। अयं तु मन्यते, यथा–लोकग्राह्यमेव वस्तु, न तु यथा शुष्कतार्किकैः स्वाभिप्रायलक्षणानुगतमुच्यते तथाभूतं, आगोपालाङ्गनादिप्रसिद्धत्वाद्वस्तुस्वरूपस्येति। अयमप्युभयधर्मात्मकवस्त्वनभ्युपगमान्मिथ्यादृष्टिः, तथाविधस्थापुरुषवत् ॥ ३ ॥

(४) साम्प्रतं ऋजुसूत्राभिप्रायः कथ्यते–तत्र ऋजु–प्रगुणं अतीतानागतवस्तुपरित्यागेन वर्तमानक्षणवर्तिवस्तुनो रूपं सूत्रयति–निर्दिशति गमयतीति ऋजुसूत्रः। अस्याभिप्रायः–अतीतस्य विनष्टत्वात् अनागतस्यालब्धलाभत्वात् खरविषाणादिभ्योऽविशिष्यमाणतया नार्थक्रियानिर्वर्तनक्षमत्वम्। अर्थक्रियाक्षमं वस्तु, तदभावान्न तयोर्वस्तुत्वमिति ऋजुसूत्रः।

अयमपि सामान्यविशेषोभयात्मकस्य वस्तुनः सामान्यांशपरित्यागेन विशेषांशस्यैव समाश्रयणात् शौद्धोदनिवन्न सम्यग्दृष्टिः, कारणभूतद्रव्यानभ्युपगमेन तदाश्रितस्य विशेषस्यैवाभावात् ॥ ४ ॥

तदिदमर्थस्वरूपनिरूपणप्रवणानां नयानां मतमुपवर्णितम् । अधुना शब्दद्वारकाणां मतमुपवर्ण्यते—

(५) इदं साधारणमात्रं त्रयाणामभिप्रायाकूतं, यदुत-शब्द एवार्थः, न ततो भिन्नोऽर्थः । तथा चानुमानम्-यस्मिन् प्रतीयमाने यन्नियमेन प्रतीयते तत्ततो न भिद्यते, यथा शब्दस्वरूपं शब्दात्, प्रतीयते च शब्दे प्रतीयमाने नियमेनार्थः, तस्मान्न ततो भिन्नः । सम्प्रत्ये[कै]कमतं कथ्यते-तत्र शब्द्यते-आहूयतेऽनेनाभिप्रायेणार्थ इति शब्दः । अयमभि(मन्यते) गम्यते-रूढितो यावन्तो ध्वनयः कस्मिंश्चिदर्थे प्रवर्तन्ते, यथेन्द्रशक्रपुरन्दरादयः, अमी(ते)षां एकोऽर्थो वाच्यः इति । अयं चार्थशब्दपर्यायोभयरूपस्य वस्तुनः शब्दपर्यायस्यैव समाश्रयणान्मिथ्यादृष्टिः ॥ ५ ॥

(६) साम्प्रतं समभिरूढ उच्यते-पर्यायाणां नानार्थतया समभिरोहणात् समभिरूढः । नह्ययं घटादिपर्यायाणामेकार्थतामिच्छति । तथाहि—घटनाद् घटः । कुटनात् कुटः । कौ भातीति कुम्भः । न हि घटनमेव कुटनमिति, शब्दप्रवृत्तिनिमित्तस्य न परस्परानुगतिरिति । तदयमपि मिथ्यादृष्टिः, पर्यायाभिहितधर्मवद्वस्तुनोऽनाश्रयणात्, गृहीतप्रत्येकावयवान्धहस्तिज्ञानवत् ॥ ६ ॥

(७) एवम्भूताभिप्रायस्त्वेवं-यदैव शब्दप्रवृत्तिनिमित्तं चेष्टादिकं तस्मिन् घटादौ वस्तुनि भवेत्, तदैवासौ युवतिमस्तकारूढ उदकाद्याहरणक्रियाप्रवृत्तौ घटो भवति, न निर्व्यापारः, शब्दव्युत्पत्तिनिमित्तशून्यत्वात्, पटादिवत् । इत्येवम्प्रकारस्य

भूतर-अर्थस्य गमाश्रयणादेवम्भूतनयो भवति, तदयमप्यनन्तधर्माध्यासितस्य वस्तुनोऽनाश्रयणान्मिथ्यादृष्टिः, रत्नावल्य-
वस्थं पद्मरागादौ कृतरत्नावलीव्यपदेशपुरुषवत् ॥ ७ ॥

तदेवं सर्वेऽपि नयाः प्रत्येकं साधारणाः सन्तो मिथ्यादृष्टयोऽन्योन्यं सव्यपेक्षास्तु सम्यक्त्वं भजन्ते, तदुक्तम् (?) ॥

ततश्च बहुविधा-नानाप्रकारा नयभङ्गा-अभिप्रायविशेषविकल्पा यत्र तद् बहुविधनयभङ्गं, सर्वनयविषयधर्मात्मकमित्यर्थः। सत्-स्वकीयद्रव्यक्षेत्रकालस्वभावापेक्षया भावात्मकं, असत्-परद्रव्यक्षेत्रकालस्वभावापेक्षया त्वभावात्मकम्। तथा नित्यं द्रव्यात्मकतया, अनित्यं पर्यायात्मकतया। तथा अनभिलाप्यं-वचनागोचरधर्मात्मकत्वेनावक्तव्यम्, अभिलाप्यं-वचनगोचरधर्मस्वभावत्वेन वक्तव्यम्। तथा एकं-सामान्यात्मकं, अनेकं-विशेषात्मकं। एवं परस्परविरुद्धधर्मात्मकवस्तुप्रतिपादकमित्यर्थः। एवंविधं च सत् कीदृशं जिनवचनम्?, कुनयाः-सदात्मकमेव वस्तु इति साङ्ख्याः, असदात्मकमेवेति माध्यमिकाः, नित्यमेवैकमेवेति साङ्ख्याः, अनित्यमेवानेकमेवेति च बौद्धाः, अभिलाप्यमेवेति वैयाकरणाः, अनभिलाप्यमेवेति च बौद्धाः, 'प्रतिक्षणं नश्वरमितरव्यावृत्तं च वस्तु, तच्च न शब्दगोचरः, शब्दस्य स्थिरसामान्यरूपार्थाभिधायकत्वात्' इति हि बौद्धसिद्धान्तः, अनन्तधर्मात्मके वस्तुनि एकमेव धर्मं, सदात्मकमेव वस्त्वित्यादि सावधारणमभिमन्यमाना मिथ्यादृष्टित्वेन कुत्सिता मतविशेषास्तेषां विरुद्धं-असमञ्जसतया प्रतिभासमानं। ननु नित्यमनित्यपरिहारेण व्यवस्थितं; अनित्यमपि नित्यपरिहारेण, भावाभावयोः परस्पराभावात्मकत्वात्, एवं च सदादिष्वपि वाच्यम्, तत एकत्र विरुद्धधर्मात्मकत्वप्रतिपादकं भगवद्वचनं कथं मिथ्यादृशामेव विरुद्धतया प्रतिभासत इत्युच्यते?, इत्याशङ्क्याह-

'सुप्पसिद्धं च'-प्रमाणोपपन्नम् । तथाहि-अयमात्मा आत्मत्वापरिच्युतेर्नित्यः, देवत्वादिपर्यायविनाशाच्चानित्यः । यदि चायं सर्वथाऽपि नित्य एव स्यात्? तर्हि न देवत्वादिपर्यायविनाशः स्यात् । अथ सर्वथाऽप्यनित्य एव स्यात्? तर्हि देवत्वादिपर्यायस्येवात्मत्वस्यापि विनाशाद्देवत्वपर्यायत्यागेन मनुष्यपर्याये सति आत्मव्यपदेशो न स्यात् । तथाऽयमात्मा स्वद्रव्यक्षेत्रकालस्वभावात्मकत्वेन सन् परद्रव्यक्षेत्रकालस्वभावात्मकत्वेनासन् । यदि चाऽयं सर्वथा सन् स्यात्? [तदा] घटाद्यात्मकत्वस्यापि प्राप्त्या जडोऽपि स्यात्, यदि च सर्वथाऽप्यसन् स्यात् तदा स्वद्रव्याद्यात्मकत्वेनापि न भावरूपः प्रतिभासेत । तथाऽयमात्माऽऽत्मत्वादिधर्मात्मकतयाऽभिलाप्यः, घटत्वादिधर्मात्मकतया त्वनभिलाप्यः । यदि च सर्वथाऽप्यभिलाप्यः स्यात्? तदा घटाद्यात्मकोऽप्युच्येत । किञ्च-केचिद्धर्माः सन्तोप्यनभिधेयाः । तथाहि—

"इक्षुक्षीरगुडादीनां, माधुर्यस्यान्तरं महत् । तथाऽपि न तदाख्यातुं, सरस्वत्याऽपि पार्यते ॥ १ ॥"

एवमनुभवसिद्धा वक्तुमशक्या अपि सन्त्यनन्ता धर्मा इति सिद्धम् । तथाच—

"पण्णवणिज्जा भावा, अणंतभागो उ अणभिलप्पाणं । पण्णवणिज्जाणं पुण, अणंतभागो सुयनिबद्धो ॥ १४१ ॥"

विशेषावश्यकभाष्यम् ।

इति सिद्धान्तवचोऽतीवोपपन्नं-सम्पन्नम् । तथा यदि सर्वथाऽप्यनभिलाप्योऽयमात्मा स्यात्? तदा आत्मशब्दादहंप्रत्ययगोचरस्य चिद्रूपस्य पदार्थविशेषस्य प्रतीतिर्न स्यात् । किञ्च-"शब्दो नार्थप्रतिपादक" इति ये प्रलपन्ति ते "अहं मौनी"ति

१ प्रज्ञापनीया भावा, अनन्तभागस्तु (एव) अनभिलाप्यानाम् । प्रज्ञापनीयानां पुनरनन्तभागः श्रुतनिबद्धः ॥ १ ॥

प्रतिपादकवत् स्वव्याघातकप्रतिज्ञाप्रतिपादनपरा न सहृदां वार्त्तनीयाः । तथाऽयमात्मा सामान्यरूपेण द्रव्यत्वादिना एकः, द्रव्यक्षेत्रकालस्वभावादिना सर्वेतरव्यावृत्तेन रूपेणानेकः । यदि चैकरूप एव सर्वथा स्यात् ? तदैकः सुखी अन्यो दुःखी एकः स्वपिति अन्यो जागर्ति इत्यादिभेदो न प्रतिभासेत । अथ नानारूप एव सर्वथा स्यात् ? तदाऽयमा(त्माऽयमा)त्मेत्येकरूपोऽवभासो न स्यात् । तदनयैव गत्या सर्वेऽपि पदार्था व्याख्येयाः । तदुक्तम्—

"आदीपमाव्योमसमस्वभावं, स्याद्वादमुद्राऽनतिभेदिवस्तु । तन्नित्यमेवैकमनित्यमन्य-दिति त्वदाज्ञाद्विषतां प्रलापाः ॥५॥"

[ अन्ययोगव्यवच्छेदद्वात्रिंशिका ]

एवं च प्रतिभासमुद्गरप्रतिहतं स्याद्वादे विरोधोद्भावनं नोत्थातुमपि शक्नोतीत्यर्थः । अतएव 'अवयणिज्जं' अवचनीयं, विरोधाभावादशक्यदोषोद्भावनमित्यर्थः ॥ ८ ॥

इदानीं भगवतोध्यानप्रभावाविर्भावद्वारेण स्तुतिमाह—

पसरइ तियलोए ताव मोहंऽधयारं, भमइ जयमसन्नं ताव मिच्छत्तछन्नं ।

( प्रसरति त्रैलोक्ये तावन्मोहान्धकारं, भ्रमति जगदसंज्ञं तावन्मिथ्यात्वच्छन्नम् । )

फुरइ फुडफलंताणंतणाणंसुपूरो, पयडमजियसंतीझाणसूरो न जाव ॥ ९ ॥ —मालिनी

( स्फुरति स्फुटफलदनन्तज्ञानांशुपूरः, प्रकटमजितशान्तिध्यानसूरो न यावत् ॥ ९ ॥ )

व्याख्या–प्रसरति–व्याप्तिं करोति। किं तत्?, मोहान्धकारं, मोहः–पुत्रमित्रकलत्रादिषु स्नेहरूपमोहनीयकर्म निवास एवान्धकारं मोहान्धकारम्। क?, त्रैलोक्ये–जगत्त्रये, कथं?, तावत्। तथा भ्रमति–विपरीतं प्रवर्तते। किं तत्?, जगत्–भुवनम्। कीदृक्?, असंज्ञं–धर्माधर्मादिविशिष्टविज्ञानविकलम्। कीदृशं सत्?, मिथ्यात्वच्छन्नं, मिथ्यात्वेन–सम्यक्त्वाभावेन छन्नम्–आच्छादितम्। कथं? तावत्। यावत् किं?, यावन्न स्फुरति–यावन्नोदेति। कोऽसौ?, अजितशान्तिध्यानसूरः, अजितशान्त्योर्ध्यानं–शुक्लध्यानरूपं, तदेव सूरः–आदित्यः। कथं?, प्रकटं–कर्मरजःपटलानावृतम्। कीदृशः?, स्फुटफलदनन्तानन्तज्ञानांशुपूरः, अनन्तं च तत् ज्ञानं–केवलाह्वं च, तदेवांशुपूरः–किरणसमूहः। स्फुटं–(प्रगटं) व्यक्तं, फलन्–उल्लसन् अनन्तज्ञानमेवांशुपूरो यस्य स तथोक्तः। यथा–यावदेवादित्यो नोदेति तावदेवान्धकारं जगति प्रसरति; तावदेव च निद्राविलुप्तचैतन्यं जगद् भवति। तस्मिंस्तूदिते नान्धकारं नापि निद्रयाऽचैतन्यम्, एवं तावदेव जगति मोहः प्रसरति; तावदेव च जगत् मिथ्यात्वेन निद्रारूपेण चैतन्यविकलं भवति; यावद् भगवतोः शुक्लध्यानं अनन्तज्ञानोत्पादकं नोदयमासादयति, यदा तु भगवतोः शुक्लध्यानात् त्रैलोक्यप्रकाशकं केवलज्ञानमुत्पद्यते तदा भगवतोर्देशनया मोहो मिथ्यात्वं च समूलमुन्मूल्यते इति भावः॥ ९॥

सम्प्रति भगवतोर्वर्णनामाहात्म्यमाह—

अरिकरिहरितिण्हुण्हंबुचोराहिवाही–समरडमरमारीरुद्दखुद्दोवसग्गा।
(अरिकरिहरितृष्णोष्णाम्बुचौराधिव्याधि–समरडमरमारिरौद्रक्षुद्रोपसर्गाः।)

पलयमजियसंतीकित्तणे झत्ति जंती, निविडतरतमोहा भक्खरालुंखियव्व ॥ १० ॥ —मालिनी

(प्रलयं अजितशान्तिकीर्तने झगिति यान्ति, निविडतरतमओघाः भास्करालुञ्छिता इव ॥ १० ॥)

व्याख्या–श्रीअजितशान्तिवर्णने सति झगिति–शीघ्रं यान्ति–गच्छन्ति । कम् ?, प्रलयं–क्षयम् । के ?, अरिकरिहरितृष्णोष्णाम्बुचौराधिव्याधिसमरडमरमारिरौद्रक्षुद्रोपसर्गाः । अरयः–शत्रवः, करिणो–हस्तिनः, हरयः–सिंहाः, तृष्णा–पिपासा, उष्णः–आतपः, अम्बु–जलं, चौराः–तस्कराः, आधयो–मनोजनितपीडाविशेषाः, व्याधयो–ज्वरभगन्दरादयः, समरः–सङ्ग्रामः, डमरो–राजकृतोपद्रवः, मारिः–कुपितभूतपिशाचादिकृतप्राणिक्षयः, रौद्रक्षुद्रोपसर्गाः–भयानकक्रूराशयव्यन्तरादिविहितोपद्रवाः । एतेषामितरेतरद्वन्द्वसमासः । अत्रोपमानमाह–क इव प्रलयं यान्ति ?, निविडतरतमओघा इव–अतिगाढान्धकारप्रकरा इव । अत्रोपमानवचन इव शब्दो विशेषणपदाग्रे न्यस्तोऽप्यत्र विशेष्यपदपुरो योज्यते । कीदृशाः ?, 'भक्खरालुंखियव्व' त्ति । भास्करेण–आदित्येन आलुञ्छिताः–स्पृष्टाः । "स्पृशः–फास-फंस-फरिस-छिव-छिहालुंखा-ऽऽलिहाः" [ ८–४–१८२ है० ] इत्यनेन स्पृशेरालुङ्खादेश इति ॥ १० ॥

अथ भगवतो रूपस्यध्यानद्वारेण स्तुतिमाह—

निचियदुरियदारुद्दित्तझाणग्गिजाला–परिगयमिव गोरं चिंतियं जाण रूवं ।

(निचितदुरितदारुदीप्तध्यानाग्निज्वाला–परिगतमिव गौरं चिन्तितं ययोः रूपम् ।)

कणयनिहसरेहाकंतिचोरं करिज्जा, चिरथिरमिह लच्छिं गाढसंथंभियव ॥ ११ ॥ —मालिनी

(कनकनिकषरेखाकान्तिचोरं कुर्यात्, चिरस्थिरमिह लक्ष्मीं गाढसंस्तम्भितामिव ॥ ११ ॥)

व्याख्या—ययोः श्रीअजितशान्त्योः रूपं कर्तृचिन्तितं—ध्यातं सत् [इह जगति] कुर्यात्। काम्?, लक्ष्मीम्। कीदृशीम्?, चिरस्थिरां। चिरं—चिरकालं स्थिरां—निश्चलाम्। कामिव?, गाढसंस्तम्भितामिव। गाढं—अत्यर्थं संस्तम्भिता—सम्यग् नियन्त्रिता, तामिव। यथा गाढं नाराचादिना पाञ्चालिका चिरं स्थिरा भवति, एवं यद्रूपध्यानाल्लक्ष्मीरित्यर्थः। कीदृशं रूपम्?, गौरं—अवदातम्। कियन्मानेन गौरमित्याह—कनकनिकषरेखाकान्तिचौरं। कनकस्य—स्वर्णस्य निकषः—कषपट्टस्तत्र रेखा कनकनिकषरेखा, तस्याः कान्तिर्द्युतिस्तां चोरयति—अनुकरोति यत् तत्तथा। अत्र गौरत्वे उत्प्रेक्षामाह—निचितदुरितदारुदीप्तध्यानाग्निज्वालापरिगतमिव। दुरितानि—दुष्कृतानि, तान्येव दारूणि—इन्धनानि दुरितदारूणि, ध्यानमेवाग्निः—वह्निर्ध्यानाग्निः, निचितानि—अनेकभवशतेषु सञ्चितानि—उपार्जितानि यानि दुरितदारूणि, तैरुद्दीप्तः—उज्ज्वालितो योऽसौ ध्यानाग्निस्तस्य ज्वाला—कीला, तया परिगतं—व्याप्तम्। 'इव'शब्दोऽत्रोत्प्रेक्षावचनः ॥ ११ ॥

अथ पुनर्भगवतस्तस्यैव ध्यानस्य फलविशेषद्वारेण स्तुतिमाह—

अडविनिवडियाणं पत्थिवुत्तासियाणं, जलहिलहरिहीरंताण गुत्तिट्ठियाणं।

(अटविनिपतितानां पार्थिवोत्रासितानां, जलधिलहरिह्रियमाणानां गुप्तिस्थितानाम्।)

जलियजलणजालालिंगियाणं च झाणं, जणयइ लहु संतिं संतिनाहाजियाणं ॥ १२ ॥— मालिनी

( ज्वलितज्वलनज्वालालिङ्गितानां च ध्यानं, जनयति लघु शान्तिं शान्तिनाथाजितयोः ॥ १२ ॥ )

( ...... ) जनयति—करोति । काम्? शान्तिं—व्याख्या—शान्तिनाथाजितयोर्ध्यानं—संस्मरणं कर्तृ [ चिन्तितम्, लघु—शीघ्रम् ] । अटव्यां—अरण्ये; सार्थविच्छुट्टनादि—शिवम् । केषाम्?, अर्थात् ध्यानकर्तृणाम् । कीदृशानाम्?, अटविनिपतितानाम् । पार्थिवैः स्वदेशपरदेशोद्भवैर्नृपतिभिरुत्रासितानां—ता(भा)—परमेन निपतितानां—संस्थितानाम् । तथा पार्थिवोत्रासितानाम् । यानभङ्गादिनाऽन्तःपाते सति समुद्रवीचीभिरितस्ततः प्रेर्यमाणानाम् । तथा पितानाम् । तथा जलधिलहरिह्रियमाणानां, ज्वलितज्वलनज्वालालिङ्गितानां, ज्वलितो—दीप्यमानश्चासौ गुप्तिस्थितानां, गुप्ती—कारागारे स्थितानां—प्रक्षिप्तानाम् । तथा ज्वलितज्वलनज्वालालिङ्गितानां, ज्वलितो—दीप्यमानश्चासौ ज्वलनो—दावानलादिलक्षणश्च, तस्य ज्वालाः—शिखास्ताभिः आलिङ्गिता—व्याप्तास्तेषाम् । अत्र प्रथमं शान्तिनाथनामोच्चारणं ततोऽजितस्तानुभावकारणात् छन्दोभङ्गभयाद् वा ॥ १२ ॥

अथ साम्राज्यपरित्यागपूर्वकं चारित्राङ्गीकारं भगवतोर्वर्णयन् प्रार्थनामाह—

हरिकरिपरिकिण्णं पक्कपाइक्कपुन्नं, सयलपुहविरज्जं छड्डिउं आणसज्जं ।

( हरिकरिपरिकीर्णं पकपादातिपूर्णं, सकलपृथिवीराज्यं छर्दित्वा आज्ञासज्यम् । )

तणमिव पडलग्गं जे जिणा मुत्तिमग्गं, चरणमणुपवन्ना हुंतु ते मे पसन्ना ॥ १३ ॥ —मालिनी

( तृणमिव पटलग्नं यौ जिनौ मुक्तिमार्गं, चरणमनुप्रपन्नौ भवतस्तौ मे प्रसन्नौ ॥ १३ ॥ )

व्याख्या–तौ–अजितशान्ती भवतां–स्याताम्। कीदृशौ भवताम्?, [इति] विशेषणे तात्पर्यम्। प्रसन्नौ–प्रसादपरौ। कस्य?, मे–मम तौ प्रसादपरौ भवताम्। यौ जिनौ किंविशिष्टौ?, अनुप्रपन्नौ–अङ्गीकृतवन्तौ। किम्?, चरणं–चारित्रम्। कीदृक्?, मुक्तिमार्गं। मुक्तौ–मुक्तिपत्तने मार्ग इव–पन्था इव, मुक्तिमार्गं, चरणमेव हि मुक्तिगमने मार्गः, यदुच्यते– "सम्यग्दर्शन–ज्ञान–चारित्राणि मोक्षमार्गः"। [त० १–१] किं कृत्वा?, छर्दित्वा–परित्यज्य। किम्?, सकलपृथ्वीराज्यम्। कीदृशम्?, हरिकरिपरिकीर्णम्। हरयः–केकाणवाह्लीकादिदेशोद्भवा जात्यास्तुरङ्गमाः, करिणो–भद्रजातीयसप्ताङ्गभूमतिष्ठितमतङ्गजास्तैः परि–समन्तात् कीर्णं–व्याप्तम्। तथा पुनः किंविशिष्टम्?, पक्वपादातिपूर्णं। पक्वाः–रिपुनिग्रहसमर्थाः पदातयः–पत्तयस्तैः पूर्णं–युक्तम्। कदाचिद्राज्यमपि पराभवपात्रं विडम्बना(कारकं)पात्रं ब्रह्मदत्तचक्रिण इव भवति, तदा परित्यागोचितं भवतीत्याशङ्क्याह–आज्ञायां–आदेशे सज्जं–प्रगुणं च तत्, सकलसामन्तैः सुरेन्द्रैरपि योजितकरकमलैः शासनं शिरसि धार्यते इति भावः। किमिव त्यक्तं राज्यं?, तृणमिव। किंविधम्?, पटलग्नम्। यथा पटलग्नं–वस्त्राञ्चलावलम्बितृणमाच्छोट्य त्यज्यते तथा तादृशमपि राज्यं छर्दितमिति भावः ॥ १३ ॥

सम्प्रति रमणीया(मर)रमणीवन्दनीयत्वप्रतिपादनद्वारेण स्तुतिमाह—

छणससिवयणाहिँ फुल्लनीलुप्पलाहिँ, थणभरनमिरीहिँ मुट्ठिगिज्झोदरीहिँ।
(क्षणशशिवदनाभिः फुल्लनेत्रोत्पलाभिः, स्तनभरनम्राभिर्मुष्टिग्राह्योदरीभिः।)

भगवतोश्चारित्राङ्गीकारमाहात्म्यवर्णनम्

ललियमुयलयाहिँ पीणसोणित्थलीहिँ, सय सुररमणीहिँ वंदिया जेसि पाया ॥ १४ ॥ – मालिनी

( ललितभुजलताभिः पीनश्रोणिस्थलीभिः, सदा सुररमणीभिः वन्दितौ ययोः पादौ ॥ १४ ॥ )

व्याख्या–"हुंतु ते मे पसत्रा" इति पूर्ववृत्तस्थं तच्छब्दवाक्यं अत्रापि सम्बध्यते। ययोः श्रीअजितशान्त्योः पादाः–क्रमाः वन्दिता–प्रणताः। काभिः ?, सुररमणीभिः। सुरा–भवनपतिव्यन्तरज्योतिष्कवैमानिकास्तेषां रमण्यः–कामिन्यस्ताभिः। कथम् ?, सदा। कीदृशीभिः ?, क्षणशशिवदनाभिः। क्षणः–पूर्णिमारूपं पर्व, तस्य शशी–चन्द्रः, तद्वत् वदनं–मुखं यासां तास्तथोक्तास्ताभिः। तथा फुल्लनेत्रोत्पलाभिः। नेत्राण्येवोत्पलानि–इन्दीवराणि नेत्रोत्पलानि, फुल्लानि–निर्निमेषत्वेन सदा विकस्वराणि नेत्रोत्पलानि–लोचनकमलानि यासां तास्तथोक्ता[स्ता]भिः। तथा स्तनभरनम्राभिः। स्तनयोः–कुचयोर्भरः–प्राग्भारो गुरुत्वं, तेन नम्रा–नताङ्ग्यः, ताभिः। 'नमिरीहिँ'ति "शीलाद्यर्थस्येरः" [८–२–१४५ है०।] अनेन शीलाद्यर्थस्य इर(?)प्रत्ययस्य इरादेशः। तथा मुष्टिग्राह्योदरीभिः। मुष्टिना ग्राह्यमुदरं यासां तास्तथोक्तास्ताभिः। लक्षणयुक्ता हि स्त्रियः कृशोदरा एव भवन्ति। तथा ललितभुजलताभिः। ललिते–मनोहरे भुजलते–बाहुलते, बाहुवल्ल्यौ यासां तास्तथोक्तास्ताभिः। तथा पीनश्रोणिस्थलीभिः। पीना–उपचिता श्रोणिस्थली–कटितटी यासां तास्तथोक्तास्ताभिः। लता–स्थलीशब्दौ शोभावचनौ ॥१४॥

साम्प्रतं परमपुरुषार्थहेतुसंयमानुष्ठानविघ्नभूतरोगापहारं भगवतः सकाशात् प्रार्थयति—

अरिसकिडिभकुट्ठगंठिकासाइसार–क्खयजरवणलूआसाससोसोदराणि ।

( अर्शःकिटिभकुष्ठग्रन्थिकासातिसार–क्षयज्वरव्रणलूताश्वासशोषोदराणि । )

नहमुहदसणच्छीकुच्छिकन्नाइरोगे, मह जिणजुयपाया सप्पसाया हरंतु ॥ १५ ॥ — मालिनी

( नखमुखदशनाक्षिकुक्षिकर्णादिरोगान्, मम जिनयुगपादाः सप्रसादाः हरन्तु ॥ १५ ॥ )

व्याख्या—जिनयुगपादाः । जिनयोः—अजितशान्त्योर्युगं—युग्मं, तस्य पादाः—क्रमाः । किंविशिष्टाः ?, सप्रसादाः—प्रसत्तियुक्ताः, मे—मम हरन्तु—अपनयन्तु । कानि ?, अर्शः—किटिभ-कुष्ठ-ग्रन्थि-कासा-ऽतिसार-ज्वर-व्रण-लूता-श्वास-शोषो-दराणि । अर्शांसि—गुदाङ्कुराः, किटिभो—जङ्घाचरणसन्धिभावी रोगविशेषः; कुष्ठं—त्वग्विकारविशेषः, ग्रन्थिर्वातरक्तोद्भवो मांसोपचयः, कासातिसारौ प्रसिद्धौ, क्षयो—धात्वपचयः, ज्वरः—तापः, व्रणः—गण्डः अष्टाविंशतिभेदभिन्नः, लूता—द्वात्रिंशद्भेदभिन्ना दुष्टस्फोटिकाः, श्वासः—श्वासातिरेकः, शोषः—कण्ठोष्ठताल्वादिशोषः, उदरं—उदररोगः, जलोदरकठोदरादिः । अत्रेतरेतरद्वन्द्वसमासः । तथा नख-मुख-दशना-क्षि कुक्षि-कर्णादिरोगान् । नखाः—पुनर्भवः, मुखं—वदनं, दशना—दन्ताः, अक्षि—चक्षुः, कुक्षिः—जठरं, कर्णौ—श्रुती । नखाश्च मुखं च दशनाश्च अक्षि च कुक्षिश्च कर्णौ च नखमुखदशनाक्षिकुक्षिकर्णा इति समाहारद्वन्द्वः । तत् आदिर्येषां कण्ठादीनां ते कर्णादयस्तेषां रोगा—आमयास्तान् ॥ १५ ॥

इदं सर्वश्रेयस्करं सर्वविघ्नहरं स्तवनं प्रति भव्यान् प्रवर्तयितुमाह—

इय गुरुदुहतासे पक्खिए चाउमासे, जिणवरदुगथुत्तं वच्छरे वा पवित्तं ।

( इति गुरुदुःखत्रासे पाक्षिके चातुर्मासे, जिनवरयुगस्तोत्रं वत्सरे वा पवित्रम् । )

सप्रसादा जिनयुगपादा ममार्शादिरोगानपहरन्त्विति प्रार्थना

पढह सुणह सज्झाएह झाएह चित्ते, कुणह मुणह विग्घं जेण घाएह सिग्घं ॥ १६ ॥ – मालिनी
(पठत शृणुत स्वाध्यायत ध्यायत चित्ते, कुरुत जानीत विघ्नं येन घातयत शीघ्रम् ॥ १६ ॥)

व्याख्या–भो भव्याः! यूयं इति–उक्तप्रकारेणेदं जिनवरद्विकस्तोत्रं। जिनवरयोः–अजितशान्त्योर्द्विकं–युग्मं, 'तस्य स्तोत्रं–स्तवनम्। कीदृशम्?, पवित्रं–प्रधानम्। किम्?, पठत–अधीध्वं पट्टिकादौ लिखित्वा, तथा शृणुत–आकर्णयत गुरुतोऽर्थतश्च कथ्यमानं, स्वाध्यायत–गुणयत विकथात्यागेन, ध्यायत–स्मरत पदपदार्थादिचिन्तनेन, चित्ते–मनसि कुरुत–विधत्त आर्तरौद्रपरिहारेण, कदाचिदपि चित्तान्मा मुञ्चतेत्यर्थः। 'मुणहे'ति "ज्ञो जाणमुणौ" [८–४–७ है०] इत्यनेन ज्ञाधातोर्मुणादेशः, तेन सूत्रार्थतो जानीतेत्यर्थः। पठनादेः प्रस्तावविशेषमाह–पक्षे भवं पाक्षिकं पर्व, तस्मिन्। तथा चतुर्षु मासेषु भवं चातुर्मासं पर्व, तस्मिन्, तथा वत्सरे–पर्युषणापर्वणि। वा शब्दः समुच्चये। कीदृशे पाक्षिके चातुर्मासे संवत्सरे वा पर्वणि?, गुरुदुःखत्रासे। गुरुदुःखानि–भवान्तरोपचितदुष्कर्मप्रभवाण्यसातानि, तानि त्रासयति–भापयते, परमनिर्जराहेतुत्वेन नाशयतीति भावः, गुरुदुःखत्रासं, तस्मिन्। एतत्पठनादौ हेतुमाह–येन–स्तोत्रपठनादिना कारणेन घातयत–विनाशयत। किं तत् कर्मतापन्नम्?, विघ्नं–धर्मान्तरायम्। कथम्?, शीघ्रं–झटिति, पठनानन्तरमेवेत्यर्थः ॥१६॥

अथ स्तोत्रं समर्पयन् स्तोतव्यान् प्रति भगवन्तौ श्रेयस्करणविघ्नापहारौ प्रार्थयति—

इय विजयाजियसत्तुपुत्त! सिरिअजियजिणेसर!, तह अइराविससेणतणय! पंचमचक्कीसर!।
(इति विजयाजितशत्रुपुत्र! श्रीअजितजिनेश्वर!, तथा अचिराविश्वसेनतनय! पञ्चमचक्रीश्वर!।)

तिलथंकर! सोलसम संतिजिण! वल्लह! संतेह, कुरु मंगलमवहरसु दुरियमखिलं पि थुणंतह ॥१७॥ – द्विपदी
(तीर्थङ्कर! षोडशम शान्तिजिन! वल्लभ! सतां, कुरु मङ्गलमपहरस्व दुरितमखिलमपि स्तुवताम् ॥ १७ ॥)

व्याख्या–हे श्रीअजितजिनेश्वर! विजयाजितशत्रुपुत्र! तथा शान्तिजिन! अचिराविश्वसेनतनय! पञ्चमचक्रीश्वर!, तीर्थङ्कर! षोडश[म], वल्लभ!–अभीष्ट!। केषाम्?, सतां–साधूनाम्। एतानि सर्वाणि सम्बोधनपदानि। एवंविधस्त्वं भगवन्! कुरु–विधेहि। किम्?, मङ्गलं–श्रेयः। तथा–अपहरस्व–अपनय। किं तत्?, दुरितं–दुष्कृतम्। किंविशिष्टम्?, अखिलमपि–समस्तमपि। केषाम्?, स्तुवतां–स्तवनं पठताम्। कथम्?, इति–पूर्वोक्तप्रकारेण। अत्र 'जिनवल्लभे'ति अनेन कविना भङ्ग्यन्तरेण स्वनाम सूचितं वर्तते। पुरा हि श्रीजितशत्रुमहाराजविजयादेव्यौ सारिद्यूतेन क्रीडतः। देवी च सर्वदा हारयति। यदा च भगवान् श्रीअजितस्वामी मूर्तो विजय इव वैशाखशुक्लत्रयोदश्यां निशीथसमये श्रीविजयविमानतः श्रीविजयादेव्याः कुक्षावयातरत् ततः प्रभृत्येव विजयादेवी कदापि न हारयति स्म। ततो मातापितृभ्यां प्रभोरजितेति नाम कृतम्। तथा श्रीविश्वसेनमहाराजमण्डले सम्यक्प्रयुक्तविधिमण्डल इव योगिमण्डलैः विफलितमहामान्त्रिकतान्त्रिकाद्यु-

१ मुद्रितप्रतिक्रमणपुस्तिकासु "संथुअ" (संस्तुत) इति। २ "मम" इति च पाठान्तरम्। ३ कृतेऽप्यायासे नाशाकिदं लक्षणं कुत्राप्येतस्या द्विपद्याः, केवलं पूर्वीक्तद्विरहितत्वाद्विहितोऽयं नामनिर्देशः। किञ्च—वृत्तस्यास्य सादृश्यमस्ति 'जय तिहुअणे'त्यादिस्तववृत्तेन, यद्यपि [illegible] 'रोलावृत्त'मित्युल्लिखितं अहम्मदावादनिवासिना रामचंद्रदीनानाथशास्त्रिणा 'जय तिहुअण' स्तवस्य गौर्जरानुवादे, परं न सङ्गच्छतीति तल्लक्षणं तत्र, "एकादशमधिविरति" रिति लक्षणोक्तिस्तु 'जय तिहुअण' स्तवेऽपि च चतुर्दशमधिविरतित्वादिति।

पायं स्थपितसकलजनतारूायं कृतान्तमायमशिवं महारक्ष इवोत्थितमभूत्। तच्च भाद्रपदकृष्णसप्तमीनिशीथसमये श्रीसर्वार्थ-सिद्धिमहाविमानतोऽतिविक्लवजनतोपकारायेव श्रीविश्वसेनराजप्रणयिन्याः श्रीअचिरादेव्याः कुक्षिशुक्तिपुटमचिन्त्यधाम्नि भगवत्यवतीर्णमात्रेऽपि तथा प्रपलायितं यथाऽनुद्भूतमिवासीत्। ततोऽस्य प्रभावात् सर्वत्र शान्तिरभूदिति मातृपितृभ्यां भगवतः शान्तीत्यभिधा चक्रे। अतो यद्यपि भगवन्तः सर्वेऽपि विजयहेतवः श्रेयोहेतवश्च तथापि विशेषतो विजयः शान्तिश्चैताभ्यामेव चक्रे,, इत्येतयोरेव यौगपद्येन पाक्षिकादिपर्वणि स्तोत्रमभिधीयते। नचैतदनागमिकम्, यतः श्रीमहावीरशिष्यश्रीनन्दिषेणमहर्षिणाऽपि विशेषतः पाक्षिकादिपर्वणि पाठ्यं श्रीअजितशान्त्योः स्तवनं कृतमस्ति, इति तदनुक्रममनुवर्तमानः श्रीजिनवल्लभसूरिरपि तथैव चकार। अत्र प्रथमं वृत्तं शार्दूलच्छन्दसा, ततो वृत्तपञ्चदशकं मालिनी-छन्दसा, अन्तिमं वृत्तं द्विपदीछन्दसा विरचितमस्तीति भावः॥

इति श्रीधर्मतिलकमुनिविरचिता श्रीउल्लासिकमस्तोत्रवृत्तिः समाप्ता॥

## [ वृत्तिकृत्प्रशस्तिः ]

शश्वत्तापरजोजडत्वशमिका सच्छायतादायिका, धूताचारुचरित्रमुख्यकगुणैः प्राप्ता च काञ्चिच्छ्रियम्।
येषां कीर्तिपटीजगत्त्रयजनैः सम्प्राप्य नक्तं दिवं, व्यापार्येत भजेत नो मलिनतां शीर्येत वा न क्वचित्॥ १॥

---

१ उपलभ्यते क्वचिच्छ्रीमन्नेमिजिनशिष्य इत्यपि, यथा–“श्रीनेमिवचनाद्यात्रा–ऽऽगतः सर्वरुजापहम्। नन्दिषेणगणेशोऽत्रा–जितशान्तिस्तवं व्यधात्॥ १॥” इति विविधतीर्थकल्पान्तर्गते शत्रुञ्जयकल्पे, एवमेव शत्रुञ्जयमहाकल्पेऽपि।

तेषां युगप्रवरसूरिजिनेश्वराणां, शिष्यः स धर्मतिलको मुनिरादधाति ।
व्याख्यामिमामजितशान्तिजिनस्तवस्य, स्वार्थं परोपकृतये च कृताभिसन्धिः ॥ २ ॥ – युग्मम् ।
विचक्षणैर्ग्रन्थसुवर्णमुद्रिका, विचित्रविच्छित्तिभृ(वृ)ता विनिर्मिता ।
यदीयनेत्रोत्तमरत्नयोगतः, श्रियं लभन्ते क्षितिमण्डले पराम् ॥ ३ ॥
तैः श्रीलक्ष्मीतिलको पाध्यायैः परोपकृतिदक्षैः । विद्वद्भिर्वृत्तिरियं, समशोधितरां प्रयत्नेन ॥ ४ ॥ युग्मम् ।
नयनकरशिखीन्दु(१३२२), विक्रमवर्षे तपस्यसितपष्ठ्याम् ।
वृत्तिः समर्थिताऽस्या, मानं च सविंशतिस्त्रिशती ॥ ५ ॥

संवत् १५८७ वर्षे । ग्रंथाग्रं ॥ ३२० ॥

संवत् १३२२ वर्षे फाल्गुनसुदि ६ कृता वृत्तिरियं वाचनाचार्यश्रीधर्मतिलकगणिभिः । समाप्तमिति । शुभं भवतु ।[2]

---

१ 'स्याचपस्यः फाल्गुनिक' इत्यमर । २ विक्रमपुरस्थश्रीमज्जिनकृपाचन्द्रसूरिसत्कचित्कोषस्थाया प्रतिकृते प्रान्तवर्त्तय पुष्पिकालेख ।

श्रेष्ठि देवचन्द्र लालभाई-जैन-पुस्तकोद्धार-ग्रन्थाङ्के—

कूर्चपुरीयचैत्यवासपरित्यागपुरस्सर नवाङ्गवृत्तिविधायकश्रीमदभयदेवसूरेरुपसम्पन्नोपसम्पच्छिष्य-

कविचक्रशक्रश्रीमज्जिनवल्लभसूरिपुरन्दरगुम्फितम्

# धर्मशिक्षाप्रकरणम् ।



धण्यं सतामिष्टदम् ।

नत्वा भैरविनताङ्कोऽङ्गमभयं नष्टाभिमानंकुधं, विघ्नं वंखितशोणिमक्रमनखं धण्यं सतामिष्टदम् । प्रस्तुवे ॥ १ ॥ चक्रम् ॥

पिचाणेकपिभुं ×जिनेन्द्रमसकृत्†क्रमाऽस्यं पादां ‡भवो, वेद्यं ज्ञानवतां विमर्शविशदं धर्म्यं पदं प्रस्तुवे ॥ १ ॥

भो भो भव्या ! भवाब्धौ निरवधिविधुरे यम्भ्रमद्भिर्भवद्भि-र्दृष्टान्तैश्चोल्लकाद्यैर्दशभिरसुलभं प्रापि कृच्छ्रान्नरत्वम् ।

तद्येद्दोत्रादिसामग्र्यपि समधिगता दुर्लभैवेति सम्यग्, मत्वा माहाकुलीनाः कुरुत कुशलतां धर्मकर्मस्वजस्रम् ॥ २ ॥

---

× मिर्गिकोतेन्त्रद्वितेन्त्रशरेषु 'जिनवल्लभगणिवचनमिद'मिति वाक्येन चक्रबन्धे स्वाभिधान ग्रन्थकर्त्रा । * जिनेन्द्रस्य । † चरणम् । ‡ संसारे ।

§ धर्मोपाध्यायित्व स्थानम् ।

ततश्च–भक्तिश्चैत्येषु सक्तिस्तपसि गुणिजने रक्तिरर्थे विरक्तिः, प्रीतिस्तत्त्वे प्रतीतिः शुभगुरुषु भवाद्भीतिरुद्धात्मनीतिः*।
क्षान्तिर्दान्तिः स्वशान्तिर्मु[सु]खहतिरबलावान्तिरभ्रान्तिरासे, ज्ञीप्सा दित्सा विधित्सा श्रुत-धन-विनयेष्वस्तुधीः पुस्तके च ॥३॥

[१]–व्यपोहति विपद्भरं हरति रोगमस्यत्यघं, करोति रतिमेधय-त्यतुलकीर्त्ति[तः] श्रीगुणान्।
तनोति सुरसम्पदं वितरति क्रमान्मुक्ततां, जिनेन्द्रबहुमानतः फलति चैत्यभक्तिर्न किम्? ॥ ४ ॥
तद्गेहे प्रस्तुतस्तन्यभिलषति मुदा कामधेनुः प्रवेष्टुं, चिन्तारत्नं तदीयं श्रयति करमभिप्रैति तं कल्पशाखी।
स्वः श्रीस्तत्सङ्गमाय स्पृहयति यतते कीर्त्तिकान्ता तमासुं, तं क्षिप्रं मोक्षलक्ष्मीरभिसरति रतिर्यस्य चैत्यार्चनादौ ॥५॥१॥

[२]–चक्रे तीर्थंकरैः स्वयं निजगदे तैरेव तीर्थेश्वरैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारणम्।
सद्यो विघ्नहरं हृषीकदमनं माङ्गल्यमिष्टार्थकृद्, देवाकर्षणकारि दुष्टदलनं त्रैलोक्यलक्ष्मीप्रदम् ॥ ६ ॥
इत्यादिप्रथितप्रभावमवनी-विख्यातसङ्ख्याविदां, मुख्यैः ख्यापितमाशु शाश्वतसुख-श्रीक्षपाणिग्रहम्।
आशंसादिविमुक्तमुक्तविधिना श्रद्धाविशुद्धाशयैः, शक्तिव्यक्तिसुभक्तिरक्तिभिरमि-ध्येयं विधेयं तपः ॥७॥ २॥ युग्मम्।

[३]–ज्ञानादित्रयवाञ्जनो गुणिजन-स्तत्सङ्गमात्सम्भवेत्, स्नेहस्तेषु स तत्त्वतो गुणिगुणे-कारम्याद्गुणेष्वेव यत्।
तस्मात्सर्वगसद्गुणानुमननं तस्माच्च सद्दर्शनं, यस्मात्सर्वशुभं गुणिव्यातिकरः कार्यः सदायैस्ततः ॥ ८ ॥

* उद्धा-प्रशस्ता आत्मनीतिरुद्धात्मनीति, "उद्घो हस्तपुटे वह्नौ, श्लाघायां देहजानिले" इति हैमावतरणममरवृत्तौ।

स स्नातश्चन्द्रिकाभिः स च किल मृगतृष्णाजलैरेव तृप्तः, खाब्जैर्मालां स धत्ते शिरसि स शशशृङ्गीयचापं बिभर्त्ति ।
मन्यात्येष स्वर्वीयः स्थलतलसिकता-स्तैलहेतोर्य उज्झन्, सङ्गं ज्ञानक्रियाव-द्गुणिभिरपि परं धर्ममिच्छेच्छिवाय ॥९॥३॥

[४]-स्वभेदच्छेदखेद-व्यसनपरिभवा प्रीतिभीतिप्रमीति-क्लेशाविश्वासहेतुं प्रशमदमदया-वल्लरीधूमकेतुम् ।
अर्थं निःशेषदोषा-ङ्कुरभरजननप्रावृषेण्याम्बु धूत्वा, लूत्वा लोभप्ररोहं सुगतिपथरथं धत्त सन्तोषपोषम् ॥ १० ॥
निद्रामुद्रां विनैव स्फुटमपरमचै-तन्यबीजं जनानां, लक्ष्मीतृष्णौघभावः प्रकटमपटलः सन्निपातोऽत्रिदोषः ।
स्त्रिग्ध क्षीराब्धिवारि-न्यभजदियमपां सर्पणान्नीचगत्वं, कल्लोलेभ्यश्चलत्वं स्मृतिमतिहरणं कालकूटच्छटाभ्यः ॥११॥४॥

[५]-जीवा भूरिभिदा अजीवविधयः पञ्चैव पुण्याश्रवौ, भिन्नौ षड्गुणसप्तधा प्रकृतयः पापे द्व्यशीतिः स्मृताः ।
भेदान् संवरबन्धयोः पृथगथा-ऽऽहुः सप्तपञ्चाशतं, मोक्षो देशविनिर्जरेति च नव श्रद्धत्त तत्त्वानि भोः ! ॥ १२ ॥
सर्वज्ञोक्तमिति प्रमाघटितमि त्यक्षोभ्यमन्यैरिति, न्यायस्थानमिति स्फुटक्रममिति स्याद्वादधीभागिति ।
युक्त्या युक्तमिति प्रतीतिपदमि-त्यक्षुण्णलक्ष्मेति सत्, सप्त द्वे नव चेत्यवेत्त बहुधा तत्त्वं विवक्षावशात् ॥ १३ ॥ ५ ॥

[६]-सम्यग्ज्ञानगरीयसां सुवचसां चारित्रवृन्दीयसां, तर्कन्यायपटीयसां शुचिगुण-प्राग्भारबृंहीयसाम् ।
विद्यामन्त्रमहीयसां सुमनसां भव्यप्रजप्रेयसां, धत्तोच्चैस्तपसां विकाशियशसां सम्यग्गुरूणां गिरः ॥ १४ ॥
मुक्तौ गन्तरि मोहहन्तरि सदा शास्त्रस्थितौ रन्तरि, ध्यानध्यातरि धर्मधातरि वर-व्याख्यातरि त्रातरि ।
विद्वद्भर्तरि शीलधर्त्तरि तमः-स्तोमं तिरस्कर्तरि, द्वेषच्छेत्तरि रागभेत्तरि गुरौ भक्ताः स्थ वाग्वेत्तरि ॥ १५ ॥ ६ ॥

[७]-प्रोत्सर्पद्दर्पसर्पन्मृतिजननजरा-राक्षसे नोकपाये, क्रूरोरुश्वापदौघे विषमतमकषा-येद्धदावाग्निदुर्गे ।
मोहान्धा भोगतृष्णा-ऽऽतुरतरलदृशो भूरि बम्भ्रम्यमाणा-स्त्राणाय प्राणभाजो भववनगहने क्लेशमेवाश्रयन्ते ॥१६॥
सुखी दुःखी रङ्को नृपतिरथ निःस्वो धनपतिः, प्रभुर्दासः शत्रुः प्रियसुहृदबुद्धिर्विशदधीः ।
भ्रमत्यस्यावृत्त्या चतसृषु गतिष्वेवमसुमान्, हहा ! ! संसारेऽस्मिन् नट इव महामोहनिहतः ॥ १७ ॥ ७ ॥
[८]-सख्यं साधुपदीनमुत्तमगुणा-भ्यासः परोपक्रिया, सत्कारो गुरुदेवताऽतिथियति-ष्वायत्यनुप्रेक्षणम् ।
स्वश्लाघापरिवर्जनं जनमनः-प्रेयस्त्वमक्षुद्रता, सप्रेमप्रथमाभिभाषणमिति प्रायेण नीतिः सताम् ॥ १८ ॥
तथ्यापथ्याययार्थस्फुटमितमधुरोदारसारोद्य[ता वाक्]ते वा, के(?)[चे]तश्च क्षोभलोभस्मयभयमदनद्रोहमोहप्रमुक्तम् ।
कायं देहं च गेहं व्रतनियमशमौचित्यगाम्भीर्यधैर्य-स्थैर्यौदार्यार्यचर्याविनयनयदया दाक्ष्यदाक्षिण्यलक्ष्म्या ॥ १९ ॥ ८ ॥
[९]-प्रीत्या भीत्या च सर्वं सहति किल स[दा]नो(?)-ऽप्यश्नुतेऽचेष्टमेवं,कार्यं कुर्यात् क्षमी य-त्त्र तदिह कुपितः स्पष्टमेतज्जनेऽपि ।
तस्माद[त्यु]त्युग्रराग-द्विपि भिपति रिपौ सर्वशास्त्रोदितायां, सर्वाभीष्टार्थलाभप्रभवकृतिसदाऽर्थत्तिं तद्वत् क्षमायाम् ॥२०॥
दशविधयतिधर्मस्यादिमं क्षान्तिरङ्गं, विमलगुणमणीनां रोहिणाद्रिः क्षमैव ।
वदिति कुशलवल्लिप्रोल्लसल्लास्यलीला, कुसुमसमयमुच्चैर्धत्त रोषप्रमोपम् ॥ २१ ॥ ९ ॥
[१०]-विद्याकन्दासिदण्डः कुगतिसुरगृह-प्रोल्लसत्केतुदण्डः, प्रद्वेषश्लेषहेतुः सुगतिजलधिनि-स्तारविस्तीर्णसेतुः ।
शयं सत्सङ्गरज्ज्वा व्यसनकुलगृहं रागयागाध्ययज्ञा, हारिष्टं शिष्टतायाः करणवशगता तद्गमेऽतो यतध्वम् ॥ २२ ॥

भवाब्धी-
तिरुद्दात्म-
नीतिः क्षा-
न्तिश्चेत्य-
धिकाराः

प्रेतुच्चामभिसोरकटकरटिपटाकुम्भकीलालकुल्या, वेगव्यस्तककुद्युद्भटभटपटलीलूनचक्राम्बुजानि ।
मुक्तोत्रावरुयन्धव्यतिकरविफलायस्तशस्त्राण्यभीक्ष्णं, भूयांसः प्रापुरत्र क्षयमिति करणैः कार्यमाणा रणानि ॥२३॥१०॥

[ ११ ]–मानः सन्मानविघ्नः स्फुटमविनयकृत्-कोधयोधः प्रबोध–ध्वंसी वैरानुबन्धी प्रणयविमथनी सव्यपाया च माया ।
लोभः सत्क्षोभहेतु-र्व्यसनशतमहा-धामकामोऽपि वामो,व्यामोहायेति जित्वा-ऽन्तरमरिविसरं स्वस्य शान्तिं कुरुध्वम् ॥ २४ ॥
कान्ता कान्ताऽपि तापं विरहदहनजं हन्त ! ! चित्ते विधत्ते, क्रीडा ब्रीडा मुनीनां मनसि मनसिजो-द्दामलीलाऽपि हीला ।
गात्रं पात्रं विचित्र-प्रकृतिकृतसमा-योगरोगप्रजानां, सोऽहं मोहं निहन्तुं तदपि कथमपि प्रेमरक्तो न शक्तः ॥२५॥११॥

[ १२ ]–अर्थे निःसीम्नि पाथःप्लुतजवजयिनि प्रेम्णि कान्ताकटाक्ष-प्रक्षेपस्थेम्नि धाम्नि क्षयपवनचले स्नाम्नि विद्युद्विलोले ।
जीवातौ वातवेगा-हतकमलदल प्रान्तलग्नोदबिन्दु-व्यालोले देहभाजा-मिह भवविपिने सौख्यवाञ्छा वृथैव ॥ २६ ॥
उद्दामक्रोधगृध्रे–ऽधिकपरुषरवो-त्तालतृष्णाशृगाली–शालिन्युद्यन्मनोभू-ललितकिलकिला-रावरागोग्रभूते ।
ईर्ष्याऽमर्षादिदंष्ट्रो-त्कटकलहमुख-द्वेषवेतालरौद्रे, हा ! ! संसारश्मशाने भृशभयजनने न्यूषुषां* क्वास्तु भद्रम् ? ॥२७॥

[ १३ ]–चक्षुर्दिक्षु क्षिपन्ती क्षपयति झगिति प्रेक्षकाक्षीणि साक्षा–ल्लीलालोलालसाङ्गी जगति वितनुते-ऽनङ्गसङ्गाङ्गभङ्गान् ।
रोदस्वेदप्रभेदान् प्रथयति दवथु–स्तम्भसंरम्भगर्भान्, बाला व्यालावलीव भ्रमयति भुवनं चेतसा चिन्तिताऽपि ॥२८॥

---

* "न्यूषुषां" इत्यत्रपाश्याप् 'नि' उपसर्गपूर्वं 'उ' अव्ययेन सह 'वस' धातो रूपनिष्पत्तिः ।

र्मदीक्षा-
करणम्
॥ ३ ॥

कालुष्यं कचसञ्चया-च्चपलता लीलाचललोचनाद्, बिम्बोष्ठाद्गुरुरागिता कुटिलित-भ्रूव्रततो वक्रता ।
नाभीतोऽपि च नीचता कुचतटात् काठिन्यमन्वर्थतो, वामानां वत तुच्छता परिचयाल्लग्नावलग्ना ध्रुवम् ॥२९॥१३॥
[ १४ ]—रागद्वेषप्रमोदा-रतिरतिभयशुग्-जन्मचिन्ताजुगुप्सा-मिथ्यात्वाज्ञानेहास्या-विरति मद[न]नि-द्राविपादान्तरायाः ।
संसारावर्त्तगर्त्त-व्यतिकरजनका देहिनां यस्य नैते, दोषा अष्टादशाऽऽप्तः स इह तदुदिते क्वास्तु शङ्काऽवकाशः ? ॥३०॥
विद्वत्प्रेयसि सद्गरीयसि परा-नन्दाश्रयस्थेयसि, स्फीतश्रेयसि नाशितैनसि सदा सम्यग्गुणज्यायसि ।
सज्ज्ञानौकसि धर्मवेधसि हुता-विद्यानिता[नै]नौ(?)घसि, कोऽनन्तौजसि तारतेजसि जिने सन्दे[ग्धि]दि (?) वृन्दीयसि ॥
[ १५ ]—उच्चद्दारिद्र्य[रद्दुर्ग]रुद्द(?)मसितपरशुर्दुर्गदुर्गत्युदार—द्वारस्फारापिधानं विषयविषधरग्रासगृध्य[ः खगेन्द्रः]श्वगेन्द्रः ।
क्रुद्धद्दुर्नोधयोधप्रतिभटपटलीमोहरोहत्प्ररोह—प्रेङ्खत्तीक्ष्णक्षुरप्रप्रमदमदकरिक्रूरकुप्यन्मृगारिः ॥ ३२ ॥
सर्पत्कन्दर्पपांशुप्रकरखरमरुत्सन्नद्धदुत्तुङ्गदंश—क्ष्माभृद्दम्भोलिरु(?)[रु]द्धिरनुपशमदवोद्दाहवर्षाम्बुवाहः ।
मिथ्यात्वापथ्यतथ्यस्फुरदमृतरसः प्रोल्लसल्लोभवल्लि—च्छेदच्छेकासिपत्रं श्रुतमिह तदिति ज्ञाप्यमध्याप्यमाप्य॥३३॥१५॥
[ १६ ]—तेने तेन सुधांशुधामधवलं विश्वकृत्स्वकीयं यशो, दौर्भाग्यद्रुरभाजि तेन ममृदे दारिद्र्यमुद्रा द्रुतम् ।
चक्रे केशवशक्ति[चक्रि]कमला तूर्णं स्वहस्तोदरे, पात्रत्राकृतमत्र येन विधिना स्वं स्वं नयोपार्जितम् ॥ ३४ ॥
प्रोल्लसे गुणमल्लिभिः प्रन (?)[प्रस]सृते कीर्त्त्या त्रिलोकाङ्गणे, सौख्यैरुच्चकृपे श्रिया प्रववृधे बुद्ध्या जजृम्भे भृशम् ।
स्वर्लक्ष्म्या ददृशे सतर्पमभितो वीक्षाम्बभूवे शिव—प्रेयस्या विधिदानदातुरसकृत कैर्वा न लिल्ये ? शुभैः ॥६५॥१६॥

आप्तेऽभ्रा-
न्तिः, श्रुते
ज्ञीप्सा,
धने दित्सा
चेत्यधि-
काराः

[ १७ ]–प्राप्नुर्दाहकमेव पावकमिव प्रायोऽविनीतं जनं, प्राप्नोत्येष कदाचनापि न खलु स्वेष्टार्थसिद्धिं क्वचित् ।
तस्मादीहितदानकल्पविटपि-न्युल्लासिनिःश्रेयस-श्रीसम्बन्धविधानधाम्नि विनये यत्नं विदध्याद्बुधः ॥ ३६ ॥
मूलं धर्मद्रुमस्य द्युपतिनरपति-श्रीलताकल्पकन्दः, सौदर्याह्वानविद्या निखिलसुखनिधि–र्वश्यतायोगचूर्णः ।
सिद्धान्तामन्त्रयन्त्रा-धिगममणिमहा–रोहणाद्रिः समस्तं,[सा]र्थं प्रत्यर्थितन्त्रं त्रिजगति विनयः किं न किं साधु धत्ते ?॥३७॥
[ १८ ]–संसारार्णवनौर्विपद्धनदवः कोपाग्निपाथोनिधि–र्मिथ्यावासविसारिवारिदमरुन्मोहान्धकारांशुमान् ।
तीव्रव्याधिलताशितासिरखिलान्तस्तापसर्पत्सुधा–सारः पुस्तकलेखनं भुवि नृणां सज्ज्ञानदानप्रपा ॥ ३८ ॥
मिथ्यात्वोर्वदावें व्यसनशतमहा-श्वापदे शोकशङ्का–ऽऽतङ्काद्या एव ग[व]र्ते मृतिजननजरा-ऽपारविस्तारिवारि ।
आधिव्याधिप्रयन्योद्धुरतिमिमकरे घोरसंसारसिन्धौ, पुंसां पोतायमानं दह[दद]ति कृतधियः पुस्तकज्ञानदानम् ॥३९॥
शिक्षा भव्यनृणां *गणाय मयका-ऽनर्घप्रदेनेस्तलं, दग्धुं वह्निरभाणि येयमनया वर्त्तेत योऽमत्सरः ।
नम्यं चक्रभृतां जिनत्वमपि स-ल्लब्धार्यपादैःपरं, रन्ताऽसौ शिवसुन्दरीस्तनतटे रुन्द्रे नरः सादरम् ॥४०॥ चक्रम् ॥

समाप्तं धर्मशिक्षाप्रकरणम् कृतिर्जिनवल्लभगणिन इति ॥

इति श्रेष्ठि–देवचन्द–लालभाई–जैन–पुस्तकोद्धारे ग्रन्थाङ्कः ९१

---

* आद्यपद्यवदत्राप्येतेष्वङ्किताक्षरेषु 'गणिजिनवल्लभवचनमद.' इत्यनेन वाक्येन चक्रबन्धे प्रकटित स्वाभिधानं ग्रन्थकृद्भिः । अत्रैव पृथङ्मुद्रितो लक्षिप्रायप्येतच्चक्रबन्धयोः ।

## सुरतद्रङ्गस्थे श्रीजिनदत्तसूरि-ज्ञानभाण्डागारे लभ्यग्रन्थाः—

| ग्रन्थ | मूल्य |
|---|---|
| पञ्चलिङ्गीप्रकरणम् ( सटीक ) | २-८-० |
| सन्देहदोलावली ( बृहद्वृत्तियुता ) | २-०-० |
| संवेगरङ्गशाला ( सच्छाया-प्रथमो विभाग ) | २-८-० |
| जयतिहुअणस्तोत्रम् ( सटीक ) | ०-४-० |
| प्राकृतदीपालिकापर्व 'दुरियरयसमीर' स्तोत्रम् ( सटीक ) | ०-८-० |
| भक्तामरस्तोत्रम् ( सटीक ) | ०-८-० |
| ईर्यापथिकी षट्त्रिंशिका ( जयसोमीया, सटीका ) | १-०-० |
| पौषधषट्त्रिंशिका ( जयसोमीया, सटीका ) | १-०-० |
| श्रीपालचरित्रम् ( स० श्लोकबद्ध ) | भेट |
| " " ( प्राकृत, हिन्दीसमन्वित ) | २-०-० |
| चैत्यवन्दनकुलकम् ( सटीक ) | २-४-० |
| कल्पसूत्रम् ( कल्पलताव्याख्या ) | |
| ग्रन्थपरिमलसारशतकम् | १-८-० |
| गणधरसार्धशतकम् | |
| गणधरलहरी | |

| ग्रन्थ | मूल्य |
|---|---|
| विधिमार्गप्रपा | |
| धर्म० उत्सूत्रखण्डनम् | |
| वैराग्यशतकम् ( मूल-छाया-शब्दार्थ-भावार्थसहितम् ) | १-०-० |
| साधुपञ्चप्रतिक्रमणसूत्रम् ( हिन्दी-शब्दार्थयुक्तम् ) | भेट |
| श्रावक " ( " " ) | १-०-० |
| पञ्चप्रतिक्रमणादि सूत्रम् ( मूलमात्र, शास्त्री ) | १-०-० |
| राइदेवसिप्रतिक्रमणसूत्रम् ( " " ) | ०-१०-० |
| श्रीजिनदत्तसूरिचरित्रम् ( पूर्वार्द्धम् ) | ०-४-० |
| " " ( उत्तरार्द्धम् ) | १-८-० |
| बृहत्स्तवनावली | १-८-० |
| प्राकृतव्याकरणम् | १-८-० |
| प्रश्नोत्तरमञ्जरी ( भाग १-२-३ हिन्दी ) | १-०-० |
| हर्षहृदयदर्पणम् ( भाग १-२ हिन्दी ) | भेट |
| कृपाविनोद | " |

सूचना—उपादनलभ्यानामपि ग्रन्थानां पोष्टव्ययन दातव्यमेव भविष्यति ग्राहकैरिति ।

प्राप्तिस्थान—श्रीजिनदत्तसूरि-ज्ञानभण्डार-गोपीपुरा-शीतलवाडी उपाश्रय, सुरत

इति सटीकवैराग्यशतकादिग्रन्थपञ्चकं समाप्तम् ।

इति श्रेष्ठि-देवचन्द-लालभाई-जैन-पुस्तकोद्धारे-ग्रन्थाङ्कः ९१